PARLE

## कभी न हम भूलें जी... जीते जी

## जीने की राह यही है सही

जीवन की इन राहों में हर कदम है इम्तिहान. किन राहों को अपनाएंगे, किन से मुंह मोड़ेंगे, यही हमारी पहचान. बिना चाह के, बिना आस के, किसी का हाथ बंटाना, यूं ही राह चलते, किसी के काम आना. इसी को कहते सच्चाई से जीना. कभी न हम भूलें जी . . . जीते-जी, जीने की राह यही है सही.

बरसों से भारत के सबसे ज़्यादा चाहे जानेवाले बिस्किट.




• स्वादभरे, सच्ची शक्तिभरे •

everest/95/PPL/108 R hn

# कुत्र प्रवेशः प्राप्तः ?

| | |
|---|---|
| रामः - कस्मिन् विद्यालये प्रवेशः प्राप्तः भवता ? | In which college have you got a seat ? |
| कृष्णः - इतोऽपि न कुत्रापि । | Not yet. |
| रा - किमर्थम् ? उत्तमाः अङ्काः भवता प्राप्ताः एव खलु ? | Why ? You have scored good marks, haven't you ? |
| कृ - द्वित्रेभ्यः विद्यालयेभ्यः आवेदन-पत्रम् आनीय पूरयित्वा दत्तवान् अस्मि । तेषां फलितांशस्य निरीक्षां कुर्वन् अस्मि । | I had brought application form from 2-3 colleges. Last week I applied for admission. Now I am waiting for the results. |
| रा - कस्मिन् विद्यालये प्रवेशम् इच्छति भवान् ? | Which college would you like to join ? |
| कृ - शारदामहाविद्यालये । किन्तु कदाचित् तत्र प्रवेशः न लब्धः चेत् क्लेशः भवेत् इति उद्देशेन अन्यविद्यालयानाम् आवेदन-पत्राणि अपि पूरितानि । | In Sharada college. If I don't get a seat I may be put in to difficulty. That is the reason for applying to other colleges. |
| रा - सर्वत्र प्रवेशः लब्धः चेत् ... ? | If you get seat in all the colleges ....? |
| कृ - शारदाविद्यालयं प्रविशामि । | I'll join Sharada college. |
| रा - तदा अन्यतः आवेदनपत्रं यत् आनीतं तत् व्यर्थं भवति । | Then the application brought from other colleges is of no use. Isn't it ? |
| कृ - व्यर्थता अल्पधनस्य खलु ? शारदामहाविद्यालये प्रवेशः न लब्धः चेत् अन्यत्र वा भवति इति चिन्तनं मम । विलम्बेन गतं चेत् कुत्रापि प्रवेशः न भवेत् खलु ? | That costs very little, you know ? In case of not getting seat in Sharada college, atleast I can join one of the other colleges, you know, I will not be allowed in any college if I go late. |
| रा - भवान् तु शारदामहाविद्यालये अवश्यं प्रवेशं प्राप्नुयात् । | I am very sure that you will get a seat in Sharada college. |
| कृ - अहम् अपि तथैव चिन्तयामि । तथापि दैवनिर्णयः खलु भवति अन्तिमः ? | I think so. But everything goes according to Almighty's will, doesn't it ? |

# नामनिर्वचनम् - २५

*(निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।)*

**रजनी** - रजन्ति (रञ्ज-रागे) प्रियाः भवन्ति यत्र सा रजनी = रात्रिः । [ रञ्ज (रागे) + अनिः + ङीष्] या प्रीतिपात्रतां प्राप्नोति सा रजनी इति सामान्यार्थः । रजनीपदस्य रात्र्यर्थः तावत् सुप्रसिद्धः । हरिद्रा-सस्यविशेषादयः अन्ये अर्थाः अपि तस्य सन्ति ।

तद्यथा - 'रजनी नीलिनी-रात्रि-हरिद्रा-जतुकासु च' - (मेदिनी)

**रञ्जनी** - रज्यते अनया इति रञ्जनी । [रञ्ज (रागे) + ल्युट् + ङीप्] यस्याः कारणतः रागं = प्रीतिम्, अनुरागं प्राप्नुवन्ति जनाः सा रञ्जनी । सस्यविशेषे एतत् पदं रूढम् । अन्ये अर्थाः यथा - 'शुण्डा-रोचनिका-नीली-मञ्जिष्ठासु च रञ्जनी' - (मेदिनी)

**रञ्जिनी** - रञ्जयतीति रञ्जिनी । [रञ्ज (रागे) + णिनिः] या सर्वेषां मनः रञ्जयति सा रञ्जिनी भवति ।

**रमा** - रमयति इति रमा ।[रमु (क्रीडायां) + णिच् + अच्] या सन्तोषयति, क्रीडयति सा रमा । विष्णोः पत्नी रमा तावत् लोके सर्वैः ज्ञायते एव । तथा हि कोषः - 'इन्दिरा लोकमाता मा रमा मङ्गलदेवता' (अमरः)

**रमाकान्तः** - रमायाः कान्तः = रमाकान्तः । लक्ष्म्याः पतिः इत्यर्थः । रमाकान्तः= विष्णुः । एवम् एव रमापतिः, रमानाथः इत्यादयः अपि ।

**रुक्मिणी** - रुक्मं सुवर्णम् अस्याः अस्ति इति रुक्मिणी । (रुक्म + इनिः + ङीप्) सुवर्णाभरणधारिणी इति सामान्यार्थः वक्तुं शक्यः । रुक्मिणी श्रीकृष्णस्य पत्नी । भीष्मकराजस्य पुत्री । महालक्ष्म्यवतारभूता अस्ति एषा । तथा हि श्लोकः - राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषानपायिनी ।। - (पद्मोत्तरखण्डः)

**सूचना** - *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

**सङ्केतः** - संस्कृतचन्दमामा, 'अक्षरम्' ८ क्रास्, गिरिनगरं, II फेस्, बेङ्गलूरु - ५६० ०८५



# चन्दमामा

अगस्ट् -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः'	सञ्चालकः - 'नागिरेड्डी'

## स्वातन्त्र्यस्य सुवर्णजयन्तीं निमित्तीकृत्य......

स्वातन्त्र्योत्सवाचरणस्य पञ्चाशत्तमं वर्षम् आसन्नम् अस्ति। स्वातन्त्र्यप्राप्त्यर्थं यः सङ्ग्रामः कृतः तस्य संस्मरणार्थम् एषः उत्सवः आचर्यते । असङ्ख्यजनानां त्यागस्य, तपसः, परिश्रमस्य च कारणतः स्वातन्त्र्यं प्राप्तम् अस्ति अस्माभिः ।

भारतीयैः विदेशीयशासनम् ऐदम्प्राथम्येन कदा निराकृतम् आसीत् ? विरोधध्वनिः कदा वा उत्थितः ?

भारतीयाः राजानः ईस्ट् इण्डियासंस्थायै वाणिज्यार्थम् अनुमतिं दत्तवन्तः आसन् । परन्तु तत्संस्थाजनाः वाणिज्यमात्रेण तृप्ताः न आसन् । ते अत्रत्यां भूमिं स्वाधानीकर्तुं प्रयत्नं कृतवन्तः । ततः आरभ्य एव देशे तद्विरुद्धं कार्यम् अनियतरूपेण आरब्धम् एव । तथापि विदेशीयशासनं विरुध्य प्रथमः सुसङ्घटितः सङ्ग्रामः तु १८५७तमे क्रिस्ताब्दे आरब्धः । एतस्याः सञ्चिकातः वयं ताः ऐतिहासिकीः घटनाः शृङ्खलारूपेण प्रतिमासं प्रकाशयिष्यामः ।

स्वातन्त्र्यसङ्ग्रामस्य एकैकः अपि घट्टः, एकैका अपि घटना राष्ट्रभक्तेषु अपूर्वं चैतन्यं पूरयेत् एव । अतः आगामिनीषु सञ्चिकासु वयं ताः घटनाः यथायोग्यं निरूपयिष्यामः ।

सम्पुटः - १४	अगस्ट् - १९९७	सञ्चिका - ५

प्रतिकृतिमूल्यं रू.६.०० * वार्षिकं ग्राहकशुल्कं रू.७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुशासनम् - discipline
अभ्यन्तरे - by that time
अभिज्ञातुम् - to identify
अरणिः - piece of wood used in a holy sacrifice
अवधानम् - attention
अस्थिपञ्जरम् - skeleton
आप्रच्छनम् - send off
आसन्नमरणः - nearing death
आहोस्वित् - or
उत्कोचः - bribe
उलूकः - owl
ऊढवती - married
कटाक्षः - sidelook
किंवदन्ती - rumour
कुसूलः - granary
चारः - spy
तरक्षुः - cheeta
तापः - heat
तूणीरः - quiver
दुरारोहः - steep
निहितम् - hidden
पुरस्कारः - award
प्रभूतम् - plenty
बधिरः - deaf
बिरुदः - title
बीजपूरकम् - guava fruit
भागभाक् - participant
मण्डनम् - decoration
मूलधनम् - capital
रज्जुनिश्रेणिः - rope ladder
लुठति - to roll
विप्लवः - mutiny
विमातृपुत्रः - step mother's son
विलपनम् - lamenting
शाखानगरम् - twin cities
सम्मुखम् - front
सस्तनाः - mammals
सार्वत्रिकनिर्वाचनम् - general election
स्तरः - stage

**वार्ताविशेषः**

# इंग्लेण्ड्देशस्य नूतनः प्रधानमन्त्री

स्काट्लेण्ड्देशे चतुर्दशवर्षीयः कश्चन बालकः सार्वजनिकशालायां पठन् आसीत् । स्वस्य विद्यालयस्य कठिनं, नियमबद्धम्, अनुशासनयुक्तं पाठ्यक्रमम् अनुसर्तुम् अशक्तः सः - 'गृहं परित्यज्य वेस्ट्इण्डीस् देशस्य बहमासनगरं प्रति पलायनं करणीयम्', इति चिन्तितवान् आसीत् । किन्तु तथा कर्तुं सः न शक्तः । एषा ३०वर्षेभ्यः पूर्वं प्रवृत्ता घटना । सः एव बालकः अधुना इंग्लेण्ड्देशस्य प्रधानमन्त्री सन् डौनिङ्गमार्गे दशमसङ्ख्यके भवने निवसति ।

तस्य नाम टोनि ब्लेयर् इति तु भवन्तः जानन्ति एव । मे - मासस्य प्रथमे दिनाङ्के प्रवृत्ते सार्वत्रिके निर्वाचने टोनि ब्लेयरस्य नायकत्वेन युक्तः लेबर्पक्षः जयं प्राप्तवान्, शासनं कुर्वाणं कन्सर्वेटिव्पक्षं पराजित्य अधिकारं स्वायत्तीकृतवान् च ।



६५९ स्थानैः युक्ते हौस् आफ् कामन्स् मध्ये लेबर्पक्षः ४१९ स्थानानि, कन्सर्वेटिव्-पक्षः १६३ स्थानानि, लिबरल् डेमोक्राटिक् पक्षः ४५ स्थानानि च प्राप्तवन्तः सन्ति । अन्यानि स्थानानि कैश्चित् राष्ट्रियपक्षैः, स्वतन्त्राभ्यर्थिभिः च स्वाधीनीकृतानि सन्ति ।

कन्सर्वेटिव्पक्षस्य सदस्ययोः स्काटिष्मूलयोः दम्पत्योः पुत्रः सन् १९५३ तमे वर्षे जन्म प्राप्तवान् टोनि ब्लेयर् । शालाशिक्षणं परिसमाप्य सः न्यायशास्त्रम् अध्येतुम् आक्स्फर्ड्विश्वविद्यालयं गतवान् । तस्य चिन्तनस्य दिशम् एव परिवर्तयता सैण्ट् जान्स् विद्यालयेन तस्मै विशालदृष्टिः दूरदृष्टिः च दत्ता । अध्यापकानां सहपाठिनां च विचाराणां प्रभावः तस्मिन् अभवत् । सः समाजवादिसिद्धान्तैः आकृष्टः अभवत् । तदेव तस्य लेबर् पक्षप्रवेशस्य कारणम् अपि अभवत् । श्रमिकसङ्घटनानां नियमानाम् अध्ययनं कृत्वा स्नातकपदवी प्राप्ता तेन । स्नातकपरीक्षायाम् उत्तमाः अङ्काः एव तेन प्राप्ताः । राजकीयक्षेत्रस्य प्रवेशात् पूर्वं सः कानिचन वर्षाणि न्यायवादिवृत्तिं कृतवान् आसीत् ।

१९८३ तमे वर्षे लेबर्पक्षस्य प्रतिनिधिः सन् सः हौस् आफ् कामन्स् प्रविष्टवान् । तदा सः एव अत्यन्तकनीयान् लोकसभासदस्यः इति ख्यातिं गतः आसीत् । १९९२ तमे वर्षे लेबर्पक्षेण आयोजिते "प्रतिबिम्बमन्त्रिमण्डले" (ष्याडो क्याबिनेट्) टोनिवर्येण शान्तिरक्षणविभागः निरूढः । पश्चात् सः लेबर्पक्षस्य राष्ट्रियकार्यनिर्वाहकसमितेः सदस्यः अभवत् । १९९४ तमे वर्षे सः लेबर्पक्षस्य अध्यक्षः अपि अभवत् ।

सार्वत्रिकनिर्वाचनात् पूर्वं कृते अभिप्रायसंग्रहे ६१% सदस्याः तं प्रधानमन्त्रित्वेन चितवन्तः आसन् । जान् मेजर्वर्यं २१% जनाः प्रोत्साहितवन्तः आसन् ।

आहत्य साररूपेण वक्तव्यं चेत् लेबर्पक्षेण महोन्नतः विजयः एव प्राप्तः । एतत् टोनिब्लेयर्-वर्येण अपि न निरीक्षितम् आसीत् । स्वपक्षेण जयः प्राप्यते इति तु तेन चिन्तितम् आसीत् । किन्तु कन्सर्वेटिव्पक्षेण तादृशः घोरः पराजयः प्राप्येत इति तु न ऊहितम् आसीत् ।

विजयः निश्चितः इति यदा ज्ञातं तदा स्वगृहे विजयोत्सवसभाम् उद्दिश्य वदन् टोनि ब्लेयर् - "अस्माकं देशे नवोदयस्य आरम्भः जातः अस्ति । केषुचित् प्रमुखेषु क्षेत्रेषु अस्माभिः कार्यं करणीयम् अस्ति । अस्माकं बालानां शिक्षणक्रमे, आरोग्यस्य योजनासु च नावीन्यम् आनेतव्यम् अस्ति । योग्यानां राष्ट्रिय-आरोग्यसंरक्षणवसतीनां निमित्तं व्यवस्थायाः निर्माणम् इत्यादीनां प्रमुखाणाम् अंशानां विषये अस्माकम् अवधानम् अधिकं भवेत्" इति ।

४३-वर्षीयः टोनि ब्लेयर् 'अस्य शतकस्य अत्यन्तकनीयान् ब्रिटिष्प्रधानमन्त्री' इति विशिष्टां ख्यातिं प्राप्तवान् अस्ति । गतशतके १८१२ तमे वर्षे ल्लाईलीवर् पूल् स्वस्य ४२ तमे वयसि इंग्लेण्ड्देशस्य प्रधानमन्त्री जातः आसीत् ।



# कुमुदाक्षस्य मार्गदर्शनम्

चन्दनपुरं प्रति कुमुदाक्षः नूतनतया आगतः। तस्य प्रतिवेशी प्रदीपः शान्तस्वभावः बुद्धिमान् च इति ख्यातः आसीत् । कुमुदाक्षः प्रदीपः च समान-वयस्कौ आस्ताम् ।

आगमनस्य केषाञ्चित् दिनानाम् अनन्तरं कुमुदाक्षः प्रदीपेन मिलित्वा विनयेन उक्तवान् - "भवतः विषयं ज्ञात्वा एव भवतः पार्श्वगृहम् आगतवान् अस्मि । एतस्मिन् ग्रामे वसतः मम भवतः मार्गदर्शनम् आवश्यकम्" इति ।

तदा प्रदीपः हसित्वा उक्तवान् - "अन्यथा मा चिन्तयतु । कस्यापि मार्गदर्शनं न करणीयमिति अहं सङ्कल्पं कृतवान् अस्मि । मार्गदर्शनादिसाहाय्यं विना अपि आवां मित्रे भवितुं शक्नुवः" इति ।

कुमुदाक्षः उक्तवान् - "मार्गदर्शनादि-साहाय्यं विना मैत्री न वर्धते। भवता मार्गदर्शनादिसाहाय्यं न क्रियते चेत् अहम् एव भवतः मार्गदर्शनादिसाहाय्यं करोमि । भवतु खलु ?" इति ।

"मह्यं कस्यापि मार्गदर्शनं न रोचते । अन्येषां मार्गदर्शनं मह्यं न रोचते इति कारणेन एव मया अपि अन्येषां मार्गदर्शनं न करणीयम् इति प्रतिज्ञा कृता अस्ति । मम मार्गदर्शनं निष्प्रयोजकम् एव । बुद्धिमन्तः जनाः निष्प्रयोजकं कार्यं कदापि न आरभन्ते एव" इति उक्तवान् प्रदीपः ।

"अहं भवतः मार्गदर्शनादिसाहाय्यं करोमि एव । मार्गदर्शनस्य अस्वीकरणं दोषाय इत्यपि ज्ञापयिष्यामि" इति उक्तवान् कुमुदाक्षः ।

तदा प्रदीपः स्मितवदनः सन् मौनम् आश्रितवान् । पुनः यदा तौ मिलितवन्तौ तदा कुमुदाक्षः प्रदीपम् उद्दिश्य - "भवतः समीपे लक्षं रूप्यकाणि स्युः खलु ?

बुद्धिमत्तया वृद्धिव्यवहारं कृत्वा धनं वर्धयतु'' इति सूचनां दत्तवान् ।

''ऋणं ये स्वीकुर्वन्ति तेषां बहूनि कष्टानि भवन्ति । अतः ते निश्चिते समये ऋणं न प्रत्यर्पयन्ति । तेषां विषये करुणां प्रदर्शयेम चेत् वयम् एव हानिं प्राप्नुयाम । अतः वृद्धिव्यवहारेण धनं सम्पादयितुं निष्ठुरतया व्यवहरणीयम् । अहं तथा व्यवहर्तुं न शक्नोमि'' इति वदन् प्रदीपः कुमुदाक्षस्य प्रस्तावं निराकृतवान् ।

केषाञ्चन दिनानाम् अनन्तरं कुमुदाक्षः प्रदीपं पुनः उक्तवान् - ''मित्र ! भवतः पुत्रः विद्यावान् खलु ? नगरे तेन उत्तमं कार्यं प्राप्तुं शक्यम् । अतः तं नगरं प्रेषयतु । पुत्र्याः निमित्तं तादृशं वरम् अन्विष्यतु, यश्च विवाहानन्तरं भवतः गृहे एव वसेत् । सः कृषिकार्यं करिष्यति । पुत्रः वृद्धौ पितरौ उपेक्षेत कदाचित् । किन्तु पुत्री तु तौ महता प्रेम्णा द्रक्ष्यति'' इति ।

एषा सूचना अपि प्रदीपाय न अरोचत । ''दम्पती यदि निर्मलमनसा परस्परावगति-पूर्वकं जीवनं कुरुतः तर्हि दाम्पत्यं सुखमयं भवति । मातापितृभ्यां सह पुत्र्यः यावत्पर्यन्तं भवन्ति तावत्पर्यन्तम् अपि पतिं परकीयम् इव पश्यन्ति, न तु आत्मीयतया । पतिगृहे पुत्र्याः वासः एव युक्तः'' इति उक्तवान् प्रदीपः ।

पुनः कानिचन दिनानि अतीतानि । तस्मिन् प्रदेशे सर्वत्र लुण्टाकेभ्यः भयम् उत्पन्नम् । लुण्टाकाः अकस्मात् आगत्य धनादिकं बलात् वशीकृत्य पलायन्ते स्म । आरक्षकाः तेषां ग्रहणे असमर्थाः आसन् ।



अतः प्रत्येकस्मिन् ग्रामे युवकाः सर्वे आयुधधारिणः सन्तः ग्रामस्य रक्षणम् आरब्धवन्तः ।

तथापि लुण्टाकानां समूहः आक्रमणं करोति स्म एव । कुत्रचित् ग्रामस्थाः तान् ताडयित्वा प्रेषयन्ति स्म । पुनः कुत्रचित् लुण्ठाकाः एव जयं प्राप्नुवन्ति स्म ।

यथापूर्वं कुमुदाक्षः प्रदीपस्य गृहम् आगत्य उक्तवान् - ''धनं सर्वं अयः-पेटिकायां भवति चेत् चोराः लुण्ठनं कुर्वन्ति । अतः तेषां पीडायाः समाप्तिः यावत् न भवति तावत् वाटिकायां धनस्य आभरणानां च निखननं वरम्'' इति ।

एतां सूचनाम् अपि निराकुर्वन् प्रदीपः उक्तवान् - ''विद्यमानं सर्वं वाटिकायां निखाय स्थापयामः चेत् अयःपेटिका



रिक्ता तिष्ठति। तदा संशयेन अस्मान् पीडयित्वा अस्मत्तः सत्यं वाचयन्ति चोराः। अतः भवतः सूचना न योग्या'' इति ।

''तर्हि किं करणीयम् ?'' इति पृष्टवान् कुमुदाक्षः ।

''अहं किं करोमि इति भवन्तं न वदामि । भवान् किं करोति इत्यपि अहं न पृच्छामि'' इति उक्तवान् प्रदीपः ।

पुनः कानिचन दिनानि अतीतानि । कदाचित् भूस्वामिनः रङ्गराजस्य माता अस्वस्था अभवत् । अनारोग्येण सा म्रियते इति सर्वे चिन्तितवन्तः आसन् । परन्तु सा सौभाग्येन रोगमुक्ता अभवत् । अपि च तस्याः पञ्चसप्ततितमं वर्षम् अपि तत्काले एव समाप्तिं गच्छत् आसीत् । तस्मिन् काले रङ्गराजः एकं महासमारम्भं व्यवस्थापितवान् । अतिथिसत्कारार्थम् उत्तमाः व्यवस्थाः तेन कृताः आसन् । पादाभ्याम् आगच्छतां निमित्तं विशालं मण्डपं निर्मितवान् आसीत् सः । वृषभशकटेन आगच्छतां निमित्तं विशालायां प्रशालायां व्यवस्था कृता आसीत् तेन । अश्वशकटेन ये आगच्छन्ति तेषां निमित्तं पृथक् वासप्रकोष्ठाः व्यवस्थापिताः आसन् ।

एतां वार्तां श्रुत्वा कुमुदाक्षः प्रदीपेन मिलित्वा - ''भवान् बहु बुद्धिमान् अस्ति । भूस्वामी एतं विषयं जानाति चेत् भवतः बुद्धिमत्तायाः प्रसिद्धिः इतोऽपि अधिकतया भविष्यति । अतः एकम् अश्वशकटं क्रीणातु । तेन कार्यक्रमं गच्छतु । विशिष्टम् आतिथ्यं प्राप्नोतु च'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा प्रदीपः हसन् - ''भूस्वामी स्वगृहम् आगतानां सर्वेषां अतिथीनां सत्कारं करोति । तस्य सत्कारस्य प्राप्त्यर्थं बुद्धिमत्ता न आवश्यकी । अश्वशकटेन गच्छन् अहं यदि मम स्तरं वर्धयेयं तर्हि तस्य स्तरस्य अनुगुणं योग्यम् उपायनमपि मया भूस्वामिने दातव्यं खलु? धनिकानां स्नेहः असिधाराव्रतमिव । अतः ततः दूरे स्थितिः एव वरम् । तथापि अहं न गच्छमि चेत् 'आह्वानं निराकृतवान्' इति अपकीर्तिः प्राप्ता भवेत् । अतः पादाभ्याम् एव गत्वा सामान्यः सन् भूस्वामिनः गृहस्य कार्यक्रमे भागं गृहीत्वा आगमिष्यामि'' इति वदन् कुमुदाक्षस्य प्रस्तावं निराकृतवान् ।

''वयं पादाभ्यां गच्छामः चेत् न काऽपि हानिः । परन्तु महिलाः कथं वा पादाभ्यां तावद्दूरं गच्छेयुः ? एतद्विषये भवतः

निर्णयः सर्वथा अयुक्तः'' इति उक्तवान् कुमुदाक्षः ।

''भवतः विषयम् अहं न जानामि । किन्तु एतस्मिन् विषये अपि अहं भवतः मार्गदर्शनं न अङ्गीकरोमि । भूस्वामिनः गृहस्य समारम्भं प्रति अहम् एकः एव गमिष्यामि । मम पत्नीं न नेष्यामि'' इति उक्तवान् प्रदीपः ।

कुमुदाक्षः क्षणं यावत् तूष्णीं स्थित्वा - ''प्रतिवेशिनः स्मः वयम् । केषुचित् विषयेषु वा अस्माकं सामरस्यं भवेत् खलु ? पत्नी पुत्राः च कार्यक्रमार्थं नेतव्याः इति मम चिन्तनम् । भवतः कुटुम्बं न आगच्छति चेत् 'वयमपि न आगमिष्यामः' इति वदति मम पत्नी । अतः अहं सपत्नीकः गन्तुं न शक्नोमि । भवता इव मया अपि एकाकिना एव गन्तव्यम् आपतितम्'' इति उक्त्वा ततः गतवान् ।

यथानिश्चयं कुमुदाक्षः प्रदीपः च भूस्वामिनः ग्रामं गत्वा कार्यक्रमे भागं गृहीतवन्तः । बहुजनाः आगतवन्तः इति कारणेन ग्रामे सर्वत्र महासम्मर्दः आसीत् । आगतानां महिलानां बहु क्लेशः सञ्जातः । केचन सम्मर्दे व्रणिताः अभवन् । केचन अस्वस्थाः सन्तः चिकित्सार्थं नगरं गतवन्तः । तदर्थम् अतिथीनां वृषभ-शकटानाम्, अश्वशकटानां च उपयोगः करणीयः अभवत् । अतिथिसत्कारार्थं यः व्ययः कृतः आसीत् ततोऽपि अधिकः आयः प्राप्तः आसीत् भूस्वामिना ।

'अत्र स्थितिः कष्टकरी' इति निर्णीय पूर्वनिश्चयं परिवर्त्य प्रदीपः कुमुदाक्षः च



ततः प्रस्थाय अर्धरात्रसमये स्वग्रामं चन्दनपुरं प्राप्तवन्तौ ।

तस्मिन् समये एव चन्दनपुरे अपि कोलाहलः आरब्धः आसीत् । लुण्टाकाः हठात् आक्रमणं कृत्वा ग्रामं प्रविष्टवन्तः आसन् । एकं गृहं प्रविश्य अयःपेटिकाम् उद्घाट्य तत्र किमपि अदृष्ट्वा कोपेन तान् गृहजनान् सम्यक् ताडितवन्तः । ततः कुमुदाक्षस्य गृहं प्रविष्टवन्तः । तत्र अयः - पेटिकातः सुवर्णं दशसहस्रं रूप्यकाणि च अपहृत्य बहिः यदा आगताः तदा युवसेनया ते दृष्टाः । ते युवकाः तान् लुण्टाकान् बद्ध्वा कुमुदाक्षस्य वस्तूनि तस्य गृहं प्रति प्रापितवन्तः । लुण्टाकैः आदौ यत्र आक्रमणं कृतम् आसीत् तस्य गृहस्य जनानां स्थितिः तु बहु चिन्ताजनिका

आसीत् । तेषां सर्वेषां चिकित्सां कुर्वन्तः आसन् युवकाः ।

एतां वार्तां श्रुत्वा प्रदीपः कुमुदाक्षम् उक्तवान् - ''भवान् बहु अदृष्टवान्'' इति ।

''अत्र मम अदृष्टं कारणं न, अपि तु बुद्धिमत्ता कारणम्'' इति उक्तवान् कुमुदाक्षः गर्वेण ।

''कीदृशी बुद्धिमत्ता अत्र ? भवता निष्प्रयोजकोपदेशकार्ये एव बुद्धिः व्ययी-क्रियमाणा अस्ति । यावत् सूचनादानं भवान् न स्थगयति तावत् अहं भवतः बुद्धिमत्तां न अङ्गीकरोमि । भवतः श्रेयसः कारणम् अदृष्टम् एव'' इति उक्तवान् प्रदीपः ।

तदा कुमुदाक्षः मन्दं हसन् - ''भवते उपदेशः यः दत्तः तेन एव मम प्रयोजनं जातम् अस्ति । अहं भवते सूचनां यच्छन् अस्मि इति भवान् चिन्तितवान् अस्ति । किन्तु वस्तुतः अहं भवन्तं नूतनया शैल्या मार्गदर्शनं याचितवान् । 'वृद्धिव्यवहारः करणीयः' इति मम इच्छा अभवत् । भवान् 'मास्तु' इति उक्तवान् । 'गृहजामाता आनेतव्यः' इति चिन्तितवान् आसम् । 'मास्तु' इति उक्तवान् भवान् । चोरेभ्यः कथं धनं रक्षणीयम् इत्यपि भवान् एव उक्तवान् । भूस्वामिनः गृहस्य कार्यक्रमस्य विषये अपि अहं भवतः सूचनाम् एव अनुसृतवान् । भवान् चिन्तितवान् यत् अहं भवतः मार्गदर्शनं कुर्वन् अस्मि इति । वस्तुतः तु भवतः मार्गदर्शनं प्राप्नुवन् आसम् अहम् । एतत् भवान् न ज्ञातवान् एव । अतः एव वदामि - अत्र मम बुद्धिमत्ता एव कारणम्'' इति उक्तवान् ।

तत् श्रुत्वा प्रदीपः आश्चर्यचकितः सन् उक्तवान् - ''निश्चयेन भवान् बुद्धिमान् एव । अहं यथा न जानीयां तथा भवान् मत्तः मार्गदर्शनं प्राप्तवान् । तावदेव न, मया क्रियमाणं मार्गदर्शनं लाभकरं भविष्यति इत्यपि निरूपितवान् अस्ति । इतःपरं भवान् यदा इच्छति तदा अहं यथाशक्ति मार्गदर्शनं करिष्यामि । यतः मम मार्गदर्शनं अन्येषां प्रयोजनकरं भविष्यति इति अधुना मम विश्वासः आगतः अस्ति'' इति ।

अनन्तरमपि कुमुदाक्षः प्रदीपः च उत्तमप्रतिवेशिनौ सन्तौ बहुकालपर्यन्तं सुखेन जीवितवन्तौ ।





# भ्रष्टाचारस्य निर्मूलनम्

भूपालराज्ये कदाचित् अनीतिः अधिका अभवत् । सर्वे अपि उद्योगिनः भ्रष्टाः सञ्जाताः । उत्कोचेन विना कार्यमेव न सिद्ध्यति स्म तस्मिन् देशे । चारैः एतं विचारं ज्ञात्वा राजा मन्त्रिणम् आहूय - "एतस्य विषयस्य श्रवणात् मम मनः प्रक्षुब्धम् अस्ति । भवान् यत्किमपि करोतु नाम । एषः भ्रष्टाचारराक्षसः अस्माकं देशात् बहिष्करणीयः एव । एतदर्थं भवते पञ्चदशदिनानां समयं ददामि" इति आज्ञप्तवान् ।

राज्ञा दत्तं कार्यं, तस्य अवधिं च श्रुत्वा मन्त्री सम्भ्रान्तः अभवत् । सः अनुक्षणं नगरस्य सर्वेषाम् उद्योगिनां सभाम् आयोजितवान् । तत्र सः - "भूपालदेशे अपि भ्रष्टाचारः विराजते यत् तत् तु लज्जास्पदम् । अनीतिवतां सर्वेषां भ्रष्टाचारिणां दण्डनं करणीयम् । भ्रष्टाचारः विनाशनीयः एव" इति उक्त्वा सर्वैः प्रतिज्ञां कारितवान् ।

कृतां प्रतिज्ञां स्मरन्तः अपि सर्वे उद्योगिनः अनन्तरदिनतः यथापूर्वम् उत्कोचं स्वीकुर्वन्तः एव आसन् । रक्तस्य रुचिं ज्ञातवान् व्याघ्रः इव उद्योगिनः स्वदुरभ्यासं परित्यक्तुं न शक्ताः ।

विश्वासार्हाणां स्वगृहस्य आत्मीयानां कर्मकराणां द्वारा प्रवर्तमानान् सर्वान् विचारान् ज्ञात्वा नितरां खिन्नः मन्त्री गृहम् आगत्य शिरसः उपरि हस्तं संस्थाप्य उपविष्टवान् । मनसः विक्षोभस्य कारणं पृष्टवती तस्य पत्नी । मन्त्री तां राज्यस्य अनीतेः विषयं सर्वं विवृत्य - "राज्ञा दत्तः अवधिः दिनद्वये समाप्यते । किन्तु भ्रष्टाचारः तु यथापूर्वमेव अनुवर्तते । उद्योगिनः सर्वे सम्भूय भ्रष्टाचारराक्षसस्य संहारार्थं प्रतिज्ञां कृतवन्तः । किन्तु सा

वागाडम्बरमात्रप्रतिज्ञा जाता अस्ति । किं करणीयमिति न ज्ञायते'' इति उक्तवान् ।

तस्य पत्नी कञ्चित् कालं चिन्तयन्ती मौनं स्थितवती । पश्चात् मृदु हसन्ती – ''अहो, एतदर्थं भवतः किमर्थं तावान् सम्भ्रमः ? भवतः एतस्याः जटिलायाः समस्यायाः इदमस्ति उत्तरम्'' इति उक्त्वा किं करणीयम् इति पतिं रहसि कर्णे उक्तवती । मन्त्री पत्न्या सूचितस्य परिहारस्य विषये दीर्घं चिन्तनं कृत्वा निश्चितवान् यत् एतद्विषये इतोऽपि सरलः मार्गः अन्यः कोऽपि नास्ति इति ।

अवधेः समाप्तेः अनन्तरदिने एव राजा मन्त्रिणम् अभिनन्द्य – ''पञ्चदशदिनाभ्यन्तरे भवान् राज्यात् भ्रष्टाचारस्य निर्मूलनं कृतवान् अस्ति । एतादृशं कार्यं भवादृशः महामन्त्री एव कर्तुं प्रभवति । अतः श्वः सभायां 'देशरत्नम्' इति बिरुदं दत्त्वा भवन्तं सम्मानयिष्यामि'' इति उक्तवान् ।

मन्त्री महता सन्तोषेण गृहम् आगत्य पत्न्यै कृतज्ञताः समर्पितवान्, उक्तवान् च – ''युक्ते समये सञ्जीविनीसदृशम् उपायं भवती सूचितवती । भवत्याः सूचनानुसारम् अहं राज्ञः वार्ताहरेभ्यः गुप्तचरेभ्यः प्रभूतम् उत्कोचं दत्त्वा ते यथा राजानम् अनृतवार्तां प्रापयेयुः तथा कृतवान् । तत् श्रुत्वा राजा चिन्तितवान् यत् तस्य उद्योगिनः सर्वे अत्यल्पे एव काले नीतिमन्तः अभवन् इति । गुप्तचरेभ्यः दत्तम् उत्कोचस्य धनम् अहं मदधीनेभ्यः सेवकेभ्यः च सङ्गृहीतवान् । ते तदधीनेभ्यः धनं प्राप्स्यन्ति । एवं सर्वं सुष्ठु अभवत्'' इति ।

''वस्तुतः अस्माकं देशे भ्रष्टाचारः किमर्थं एतावान् प्रबलः जातः अस्ति इति भवान् कदापि चिन्तितवान् वा ?'' इति पृष्टवती मन्त्रिणः पत्नी ।

तदा मन्त्री – ''भवती एव कथयतु'' इति तां सूचितवान् ।

तदा सा उक्तवती –''भ्रष्टाचारराक्षसस्य अनेकानि मुखानि सन्ति । राजनीतिम् अजानता राज्यपरिपालनासमर्थेन कृतं सिंहासनारोहणमपि अनीतिद्योतकम् एव । अतः एव राज्ये सर्वत्र भ्रष्टाचारराक्षसः स्वेच्छया व्यवहरन् अस्ति'' इति ।

मन्त्री पत्न्याः वचनस्य यथार्थताम् अवगच्छन् मौनम् आश्रितवान् ।





# सम्राट् अशोकः

## ६

(यदा मौर्यचक्रवर्ती बिन्दुसारः अस्वस्थः आसीत् तदा तक्षशिलायां विद्रोहः आरब्धः । बिन्दुसारस्य ज्येष्ठपुत्रः सुषेणः तद्विषये अवधानं न दत्तवान् । अतः अशोकः स्वल्पेन सैन्येन सह तक्षशिलां गत्वा एकस्मिन् एव दिने विद्रोहं शमयित्वा प्रत्यागतवान् । राजधानीप्रवेशात् पूर्वमेव अशोकः मारणीयः इति सुषेणः उपायं कृतवान् । किन्तु सः उपायः विफलः अभवत् । तदनन्तरम्.......)

नगरस्य सीमाप्रदेशे प्रवृत्तां दुर्घटनां निवेदितवन्तं प्रधानमन्त्रिणं भल्लाटकं राजा बिन्दुसारः उक्तवान् - "कीदृशी दुर्घटना प्रवृत्ता ! अशोकस्य कापि हानिः न अभवत् खलु ? अशोकः कथं सैन्यं रचितवान्, कथं जयं प्राप्तवान् इति विस्तरेण भवान् मां वदति इति अहं निरीक्षमाणः आसम् । किन्तु एतादृशी दुर्वार्ता मया श्रोतव्या अभवत् । अपि च तस्याः दुर्वार्तायाः पृष्ठभूमिकाविषये चर्चनीयम् आपतितम्" इति ।

मौनं श्रृण्वन्तं प्रधानमन्त्रिणं राजा पुनश्च उक्तवान् - "तक्षशिलायाः विद्रोहिणां प्रतिनिधयः केचन अत्र सन्ति इति भावयामि । तेषां विप्लवं शमितवतः अशोकस्य विषये प्रतीकारं कर्तुम् एतादृशं घोरं कार्यं ते कृतवन्तः इति मन्ये । भवान् किं वदति भल्लाटक ?" इति ।



अभवत् ।

कञ्चित् कालं राजभवनं स्मशान-मौनयुक्तं अभवत् । कोऽपि सम्भाषणस्य अनुवर्तने आसक्तः न आसीत् । तावता नगररक्षकः तत्र आगत्य महाराजं मन्त्रिणं च नमस्कृतवान् । तस्य मुखं बहु गम्भीरम् आसीत् ।

''भवतः विचारणा समाप्ता वा ?'' इति पृष्टवान् महाराजः ।

''समाप्ता महाप्रभो'' इति मन्दस्वरेण उक्तवान् नगररक्षकः ।

''कस्यापि राजद्रोहिणः हस्तक्षेपः अत्र न स्यात् खलु ? एषा घटना आकस्मिकी स्यात् खलु ?'' इति पृष्टवान् महाराजः ।

''न महाप्रभो । अवरोधभित्तेः शिलाः शिथिलीकृत्य तासाम् अधः काष्ठ-फलकानि योजितानि आसन् । पृष्ठतः स्थित्वा फलकानि यदा कम्पितानि तदा शिलाः सैन्यस्य उपरि पतिताः । तथा काष्ठफलकानां योजनं कष्टकरं कार्यमेव । तत् कार्यं कर्तुं न्यूनातिन्यूनं शतं जनाः अपेक्षिताः स्युः'' इति उक्तवान् नगररक्षकः ।

''विश्वसितुमेव न शक्यते । अस्माकं दलपतिषु अन्यतमः आ प्रातः तस्य उद्यान-स्य समीपे एव आसीत् खलु? तथापि तावन्तः जनाः कार्यं कर्तुं कथं शक्ताः ?'' इति आश्चर्येण पृष्टवान् राजा ।

''अस्माकं दलपतिषु अन्यतमः एव अस्मिन् विषये स्वमार्गदर्शनेन द्रोहिणः साहाय्यं कृतवान् अस्ति प्रभो'' इति

''अवरोधभित्तितः सैन्यस्य उपरि महाशिलाः क्षिप्तवत्सु विद्रोहिषु केचन बद्धाः सन्ति । तेषां विचारणाम् अस्माकं नगररक्षकः कुर्वन् अस्ति । सद्यः सोऽपि अत्र अगच्छेत्'' इति उक्तवान् प्रधानमन्त्री ।

''किन्तु अस्मिन् विचारे भवान् अन्यं कमपि शङ्कमानः अस्ति इति भासते'' इति वदन् कुतूहलेन राजा प्रधानमन्त्रिणं दृष्टवान् ।

''आं, महाप्रभो, भवतः ऊहा युक्ता एव'' इति उक्तवान् प्रधानमन्त्री ।

प्रधानमन्त्रिणः उत्तरं श्रुत्वा महाराजः क्षणं यावत् दिग्भ्रान्तः अभवत् । नगररक्षकस्य विचारणया कीदृशी घोरा वार्ता प्रकाशिता भवेत् इति चिन्ताकुलोऽपि

उक्तवान् नगररक्षकः ।

"कियत् औद्धत्यम् ! इतः पूर्वम् एतादृशे राजद्रोहकार्ये मौर्यसैन्यस्य कोऽपि दलपतिः मनः न कृतवान् आसीत् । सैन्ये विद्रोहवार्ता तु अश्रुतपूर्वा आसीत्" इति आश्चर्येण उक्तवान् राजा ।

"मौर्यवंशस्य भाविना राज्ञा युवराजेन एव उत्कोचदानेन प्रलोभनं जन्यते चेत् ततः प्रभावितः कश्चित् दलपतिः अत्र भागभाक् भवति चेत् किम् आश्चर्यं महाराज !" इति उक्तवान् नगररक्षकः यातनायुक्तेन ध्वनिना ।

"भवान् किं वदन् अस्ति ?" इति पृष्टवान् महाराजः ।

"महाप्रभो, क्षन्तव्यः अहम् । विचारणेन प्रकाशितस्य सत्यस्य निवेदनमेव मम धर्मः । मया उच्यमानं सर्वं यथार्थमेव" इति विनयेन उक्तवान् नगररक्षकः ।

तदा किञ्चित्कालं यावत् तत्र मौनेन आवृतम् । मौनं भित्त्वा महाराजः उक्तवान् - "अहं भवति पूर्णतया विश्वसिमि । भवान् मां सत्यवार्तां निवेदितवान् यत् तदर्थं भवन्तं, भवतः राजभक्तिं च अहं हृत्पूर्वकम् अभिनन्दामि । आश्वस्तः खलु भवान्" इति ।

"एतं विषयं भवते निवेदयितुं ममापि बहु कष्टम् अभवत् । तथापि अहं कर्तव्यपालनार्थं हृदयं पाषाणीकृत्य आगतवान् । प्रभुणा अहं क्षन्तव्यः" इति उक्तवान् नगररक्षकः ।

तावत्पर्यन्तं मौनं शृण्वन् स्थितः प्रधानमन्त्री नगररक्षकम् उक्तवान् - "भवता



हृदयम् इतोऽपि कठोरं करणीयम् आपतितम् अस्ति । महाराजस्य, राज्यहितस्य, मौर्यवंशस्य गौरवस्य च रक्षणार्थम् अस्माभिः एतत् कुतन्त्रम् अप्रकाशितं यथा तिष्ठेत् तथा जागरूकता आश्रयणीया । अस्मिन् अपराधे ये भागभाजः सन्ति ते च एतद्रहस्योद्घाटनं यथा न कुर्युः तथा भवता व्यवस्था करणीया" इति उक्त्वा महाराजं दृष्ट्वा - "मम सूचना प्रभोः सम्मता अस्ति इति भावयामि" इति उक्तवान् ।

"प्रधानमन्त्रिणः बुद्धिमत्तायां, विवेकितायां च अहं विश्वसिमि" इति उक्तवान् चिन्ताक्रान्तः महाराजः ।

"ते तु आहत्य शताधिकाः सन्ति खलु?" इति स्वगतं वदन् इव मन्दस्वरेण

प्रधानमन्त्रिणम् उक्तवान् नगररक्षकः ।

"भवतु नाम ! तथापि शाश्वतरूपेण तेषां मुखानि पिधातव्यानि एव । तत्कार्यमपि सूर्योदयात् पूर्वमेव भवेत् । प्रभाते 'सेनायाः उपरि शिलाः पातयित्वा युवराजम् अशोकं मारयितुं तक्षशिलायाः विद्रोहिणः एव प्रयत्नं कृतवन्तः आसन् । ते सर्वे बद्धाः । अपि च तेभ्यः मरणदण्डः अपि दत्तः' इति वार्ता सडिण्डिमघोषं सर्वत्र प्रसारणीया" इति सूचितवान् प्रधानमन्त्री ।

"भवतः निर्णयः योग्यः एव । किन्तु...." इति अन्यत्किमपि वक्तुम् उद्युक्तः नगररक्षकः मध्ये एव स्थगितवान् ।

"अस्माकं राज्यस्य राजवंशस्य च कीर्तेः संरक्षणार्थं भवान् शतं किं, सहस्रं जनान् मारयितुमपि न बिभेति किल ?" इति पृष्टवान् प्रधानमन्त्री ।

"किञ्चिदपि न बिभेमि" इति उक्तवान् नगररक्षकः ।

"अशोकस्य विषये युवराजस्य सुषेणस्य द्वेषः, वैरं च अस्ति इति किंवदन्ती अपि राज्यस्य विभागस्य कारणं भवेत् कदाचित् । इदानीं बद्धान् यदि विमोचयामः तर्हि ते किंवदन्तीं प्रसारयन्ति खलु ?" इति उक्तवान् प्रधानमन्त्री ।

"आं, भवता उक्तं सत्यमेव" इति दृढस्वरेण उक्तवान् नगररक्षकः ।

"साधु । साक्षात् अर्धरात्रसमये भवान् स्वस्य कर्तव्यं निर्दाक्षिण्यं निर्वर्तयतु" इति आज्ञापितवान् महाराजः ।

नगररक्षकः महाराजं मन्त्रिणं च नमस्कृत्य ततः निर्गतवान् ।

नगररक्षकः यावत् राजभवनात् निर्गच्छन् आसीत् तावता अभिमुखम् आगतः सुषेणः तं पृष्टवान् - "अहं श्रुतवान् यत् अशोकस्य



हननस्य कुतन्त्रे बद्धः दलपतिः 'ममापि सहभागः अस्ति' इति वदन् अस्ति इति । किम् एतत् सत्यम् ?'' इति ।

''आं, सः तथैव वदन् अस्ति'' इति उक्तवान् नगररक्षकः ।

''असत्यं, सर्वम् असत्यम् । असत्यं कथयतः तस्य मरणदण्डः विधातव्यः'' इति क्रोधेन उक्तवान् सुषेणः ।

तस्य वचनेन नगररक्षकः क्षणं यावत् दिग्भ्रान्तः । 'एतादृशः कुटिलबुद्धिः एव अस्माकं राजा भविष्यति खलु !' इति चिन्तयन् सः खेदं प्राप्तवान् अपि ।

''दलपतिना उक्तम् असत्यं महाराजः जानाति किम् ?'' इति पुनः पृष्टवान् सुषेणः ।

''महाराजाय दलपतिना उक्तस्य विषयस्य निवेदनं मम कर्तव्यं खलु युवराज !'' इति उक्तवान् नगररक्षकः ।

''तस्य वचने महाराजः विश्वसितवान् वा ?'' इति पृष्टवान् सुषेणः ।

''तं विषयम् अहं वक्तुं न शक्नोमि युवराज'' इति उक्तवान् नगररक्षकः ।

''तं विषयं श्रुत्वा महाराजः किं चिन्तितवान् ?'' इति पृष्टवान् सुषेणः ।

''तत् वक्तुं कष्टमेव । किन्तु एकं विषयं तु जानामि यत् दलपतिना सह अस्मिन् कुतन्त्रे ये भागं गृहीतवन्तः तेभ्यः सर्वेभ्यः मरणदण्डः देयः इति महाराजः निर्णीतवान् अस्ति'' इति उक्तवान् नगररक्षकः ।

''साधु, साधु । योग्यः एव निर्णयः । अहम् इव मम पिता अपि महाबुद्धिमान् एव'' इति उक्त्वा सन्तोषेण करताडनं कृतवान् सुषेणः ।

नगररक्षकस्य असहनीयः कोपः आगतः । तथापि सः उद्गतं कोपम् अप्रदर्शयन् - ''सत्यमेव युवराज'' इति





उक्तवान् ।

तस्मिन् एव समये मगधस्य सेनाधिपतिः महाराजदर्शनाय तत्र आगतः । सः सुषेणं नमस्कृतवान् । नगररक्षकः अपि सेनाधिपतिं नमस्कृत्य – ''अहमपि भवतः दर्शनाय एव इतः प्रस्थितवान् आसम्'' इति उक्तवान् ।

''अत्रैव तिष्ठतु । अधुनैव आगमिष्यामि'' इति वदन् सेनाधिपतिः अग्रे गतवान् ।

''भवन्तं मां च महाराजः एकदा एव आगन्तुम् उक्तवान् इति भाति'' इति वदन् सुषेणः अपि सेनाधिपतिना सह शीघ्रं गतवान् ।

महाराजः तौ दृष्ट्वा – ''प्रमुखाणां भवतां त्रयाणाम् अपि अत्र युगपत् उपस्थितिः मम सौलभ्याय एव अभवत् । भवतां पुरतः कश्चन प्रमुखः विषयः वक्तव्यः अस्ति । उपविश्यताम्'' इति उक्तवान् ।

प्रधानमन्त्री, सेनाधिपतिः, सुषेणः च कौशेयतल्पयुक्ते पीठे उपविष्टवन्तः । किञ्चित्कालात्मकस्य मौनस्य पश्चात् महाराजः सुषेणं पश्यन् – ''सुषेण ! मया यत् श्रुतं तस्मिन् विश्वसितुं मम मनः न अङ्गीकरोति भोः'' इति उक्तवान् चिन्ताकुलः सन् ।

''भवता किं श्रुतम् इति अहं न जानामि खलु'' इति उक्तवान् सुषेणः ।

''अहं किं श्रुतवान् इति भवान् सम्यक् जानाति एव । गच्छता कालेन सर्वमपि स्वयं प्रकाशितं भविष्यति । अपि च यत् यत् भवेत् तत् सर्वं कालः एव निर्णेष्यति । अतः अलम् अप्रस्तुतेन चिन्तनेन । प्रकृतम् अनुसराम तावत् । अस्माकम् अधीनराज्येषु मुख्यायाः अवन्त्याः राजधानीम् उज्जयिनीं प्रति कश्चित् युवराजः राजप्रतिनिधित्वेन प्रेषणीयः इति प्रधानमन्त्रिणः, सेनाधिपतेः च अभिप्रायः । भवन्तम्, अशोकं च विहाय अन्यः एतत्कार्यार्थम् अर्हः कोऽपि नास्ति । अतः भवतोः अन्यतरेण तत्र गन्तव्यम् अस्ति । अन्यदपि अत्र किञ्चित् चिन्तनीयम् अस्ति । यावत् भवन्तौ भ्रातरौ द्वेषं परित्यज्य सामञ्जस्येन न भवतः, तावत् भवद्भ्यां परस्परं दूरे एव भवितव्यमिति वयम् इच्छामः'' इति उक्तवान् ।

सुषेणः किमपि अवदन् मौनम् आश्रितवान् ।

''भवान् उज्जयिनीं गमिष्यति वा ?'' इति पृष्टवान् महाराजः ।

''अहम् अत्रैव भवामि'' इति उक्तवान् सुषेणः ।

''भवान् ज्येष्ठः कुमारः इत्यतः भवते एव प्रथमं चयनस्य अवकाशं दत्तवान् अहम् अन्यत्र गमनार्थम् । भवान् न इच्छति इति कारणेन अशोकमेव प्रेषयिष्यामि । सः मम अभिप्रायम् अनुमन्यते इति अस्ति मम विश्वासः । भवतु, अधुना भवान् गन्तुम् अर्हति'' इति उक्तवान् महाराजः ।

सुषेणः गमनार्थम् उत्थितवान् । 'महाराजः मां युवराजम् अभावयन् ज्येष्ठपुत्रः इति परिगणय्य व्यवहृतवान्' इति तस्य कोपः आगतः । तथापि सः तम् अप्रकटयन् मन्दं बहिः प्रस्थितवान् ।

स्वस्य कार्यस्य अनुष्ठाने निरतः नगररक्षकः त्वरितमेव बद्धैः शतेन सैनिकैः सह दलपतिमपि वधास्थानं नीतवान् । तदा बद्धः दलपतिः नगररक्षकं दीनः सन् याचितवान् - ''स्वामिन् ! कृपया मयि दयां प्रदर्शयतु । केवलम् एकवारं युवराजेन सुषेणेन मेलितुम् अवकाशं कल्पयतु । अहं कमपि दोषं न कृतवान् । सः यथा उक्तवान् तथा सर्वं कृतवान् अस्मि । तद्विना अधिकं किमपि अहं न जानामि'' इति ।

दलपतेः विलपनं श्रोतुम् अशक्तः नगररक्षकः - ''भवते मरणदण्डः दातव्यः इति युवराजेन सुषेणेन एव उक्तम् अस्ति । जीवनस्य अन्तिमक्षणे विद्यमानस्य भवतः पुरतः असत्यकथनेन मम को वा लाभः ?'' इति उक्तवान् ।

''किं युवराजः सुषेणः एव तथा उक्तवान् ?'' इति वदन् उच्चैः रोदनम् आरब्धवान् दलपतिः ।

''आम् । यतः भवान् अस्मिन् कुतन्त्रे तमपि भागभाजम् उक्तवान् अस्ति, अतः भवता उक्तं सर्वम् असत्यमिति सः वदति'' इति उक्तवान् नगररक्षकः ।

''हे भगवन् ! कीदृशम् अन्याय्यं प्रवृत्तम् ! मुग्धं मां वज्राङ्गुलीयकेन प्रलोभ्य - 'भवतः भविष्यम् उज्ज्वलं करिष्यामि' इति वचनं दत्त्वा, अधुना एवम् उक्तवान् वा सः? एवं तर्हि अद्य मम या गतिः जाता सा एव गतिः तस्यापि भविष्यति'' इति वदन् वधस्थाने विलपनं कृतवान् । अल्पे एव काले तस्य शिरच्छेदः जातः ।

- (अनुवर्तते)






# गोपालस्य श्रेष्ठता

दृढसङ्कल्पः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! कृताः प्रयत्नाः सर्वे विफलाः चेदपि पुनः पुनः प्रयत्नं कुर्वतः, एतस्मिन् भयजनके घोरे श्मशानमार्गे मध्यरात्रे निर्भयं सञ्चरतः भवतः सङ्कल्पदृढता श्लाघनीया एव । किन्तु भवता स्मर्तव्यं यत् यस्य विवेचनाशक्तिः न भवति, यस्य च दूरदृष्टिः न भवति तस्य एतादृशी सङ्कल्पदृढता व्यर्थश्रमाय हानये च भवेत् इति । अत्र गोपालस्य कथा एव उदाहरणम् । धनसम्पादनार्थं निरन्तरप्रयत्नं कृतवान् अपि गोपालः विवेचनशक्तेः अभावतः प्राप्तस्य अपि अवकाशस्य सदुपयोगं स्वीकर्तुं न

## वेतालकथा



शक्तवान् । भवतः मार्गायासपरिहारार्थं तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

गोपालः कश्चन सज्जनः । माधवपुरस्य सर्वे जनाः तस्मिन् विशेषतः स्निह्यन्ति स्म । कदाचित् गोपालस्य मनसि भावना उत्पन्ना यत् मया प्रभूतं धनं सम्पादनीयं, श्रेष्ठः इति कीर्तिः सम्पादनीया च इति । अतः सः तदीयग्रामे एव स्थितस्य रामशर्मनामकस्य पण्डितस्य गृहं गतवान् ।

गोपालस्य अपेक्षां श्रुत्वा रामशर्मा कांश्चन प्रश्नान् पृष्टवान् । कांश्चन शास्त्रविषयान् अपि सप्ताहाभ्यन्तरे बोधितवान् । सप्ताहानन्तरं सः गोपालम् उद्दिश्य – ''वत्स ! पाण्डित्यप्राप्त्यर्थं भवतः सामर्थ्यम् अपर्याप्तम् । किन्तु भवतः कण्ठः सुमधुरः अस्ति । त्रिपुरनगरे रागप्रियः नाम सङ्गीतविद्वान् अस्ति । भवान् तत्सकाशात् सङ्गीतं जानातु'' इति उक्तवान् ।

गोपालः त्रिपुरनगरं गत्वा रागप्रियं दृष्ट्वा स्वस्य अपेक्षां निवेदितवान् । रागप्रियः गोपालं सप्ताहं यावत् सङ्गीतं बोधयित्वा – ''भोः, यद्यपि भवतः कण्ठः सुमधुरः अस्ति, तथापि सङ्गीताभ्यसार्थम् एषः अनर्हः एव । भवतः अङ्गुलयः दीर्घाः, चित्रलेखनार्थम् अनुकूलाः च सन्ति । अतः भवान् विजयपुरं गच्छतु । तत्र सुरेखः नाम कश्चन श्रेष्ठः चित्रकलानिपुणः अस्ति । ततः भवान् चित्रकलाम् अभ्यस्यतु'' इति सूचितवान् ।

गोपालः सुरेखसमीपं गतवान् । सुरेखः अपि सप्ताहं यावत् गोपालं परीक्ष्य – ''भोः, चित्रकारः ऊहाशक्तिमान् भवेत् । दृष्टं सर्वम् अपि तस्य स्मृतिपटले चित्ररूपेण तिष्ठति चेदेव सः चित्राणि लेखितुं शक्नोति । भवतः ऊहाशक्तिः इदानीं दुर्बला अस्ति । ऊहाशक्तिः आदौ वर्धनीया भवता । शास्त्राध्ययनात् सा शक्तिः वर्धिष्यते । अतः भवान् माधवपुरस्य पण्डितस्य रामशर्मणः शिष्यत्वं प्राप्य कानिचन वर्षाणि श्रद्धया अध्ययनं करोतु'' इति बोधितवान् ।

माधवपुरात् स्वस्य आगमनं, रामशर्मणा कृतं पाठननिराकरणं च वक्तुम् अनिच्छन् गोपालः सुरेखाय कृतज्ञतां समर्प्य ततः स्वगृहं प्रति प्रस्थितवान् । 'अहम् एतस्मिन् जन्मनि महापुरुषत्वं प्राप्तुं प्रायः न

शक्नोमि' इति चिन्तयन् नितरां निराशः जातः सः ।

यावत् सः ग्रामसीमां प्राप्तवान् तावता अनतिदूरात् किञ्चन आक्रन्दनं श्रुतम् - "रक्ष्यताम्, रक्ष्यताम्" इति । गोपालः शब्दस्य दिशि गच्छन् परितः दृष्टिं प्रसारितवान् । समीपस्थे गर्ते कश्चन संन्यासी पतितः आसीत् ।

गोपालः गर्तसमीपं गत्वा पतितस्य उन्नयनार्थं हस्तं प्रसारितवान् । किन्तु उभयोः मध्ये स्थितस्य अन्तराधिक्यस्य कारणतः महता प्रयत्नेन अपि पतितस्य हस्तं स्प्रष्टुं न शक्तवान् सः ।

"मित्र ! अलं भीत्या । समीपे कुत्रापि दण्डः, वृक्षशाखा, बलवती लता वा स्यात् एव । तत्साहाय्येन भवन्तम् उन्नेष्यामि" इति उक्तवान् गोपालः ।

"भवान् एतावत् उक्तवान् किल । तावता अहं सन्तुष्टः अस्मि" इति उक्तवान् सः पुरुषः ।

ततः सः पुरुषः स्वयम् उपरि आगतवान् । अनन्तरक्षणे सः गर्तः अदृश्यतां गतः ।

एतत् दृष्ट्वा नितराम् आश्चर्यम् अनुभवन् गोपालः - "भवान् महामहिमान्वितः इति भासते । तथापि सामान्येन इव 'रक्ष्यताम्' इति आक्रन्दनं किमर्थं कृतं भवता?" इति पृष्टवान् ।

तदा सः मनुष्यः हसन् - "अहं कश्चन संन्यासी । अपूर्वाः शक्तयः मदधीनाः सन्ति । प्रतिदिनम् अपि अहम् एकस्य सज्जनस्य अपेक्षां पूरयामि । अतः एव गर्तं




निर्माय आक्रन्दनं करोमि । सज्जनः अदृष्टशाली मम आक्रन्दनं श्रुत्वा मत्समीपम् आगच्छति । अद्य अदृष्टशाली भवान् आगतः । अतः अपेक्षितं वरं प्रार्थयताम्" इति उक्तवान् ।

एतत् श्रुत्वा गोपालः दीर्घं निश्श्वस्य - "महापुरुषत्वं प्राप्तव्यं, प्रभूतं धनं सम्पादनीयं च इति बहोः कालतः मम अपेक्षा । तस्याः पूरणार्थं मया कश्चन प्रयत्नः कृतः अपि" इति उक्त्वा आत्मना कृतान् प्रयत्नान् सर्वान् विस्तरेण निवेदितवान् ।

संन्यासी गोपालस्य शिरसि हस्तं संस्थाप्य - "एतत्क्षणे एव भवान् महापण्डितम् अपि जेतुं समर्थः पण्डितः जातः अस्ति । सङ्गीते चित्ररचनायां चापि



भवत्सदृशः अन्यः न भविष्यति'' इति उक्तवान् ।

गोपालः संन्यसिनं साष्टाङ्गं नमस्कृतवान् । तम् आशिषा अनुगृह्य संन्यासी - ''भवान् स्वश्रेष्ठताकारणतः एव धनं सम्पादयितुम् अर्हति, न तु पाण्डित्यबलात् । सर्वदा स्मर्तव्यम् एतत्'' इति उक्तवान् ।

संन्यासिनः अनुज्ञां प्राप्य ततः प्रस्थितः गोपालः रामशर्मणः समीपं गत्वा - ''श्रीमन् ! पाण्डित्यप्राप्तियोग्यता मम नास्ति इति उक्तवान् आसीत् खलु भवान् ? किन्तु प्रयत्नः दैवानुग्रहः च यदि स्यात् तर्हि असाध्यं किं वा स्यात् ? मया पाण्डित्यं प्राप्तम् अस्ति इदानीम् । पाण्डित्यस्य अभावः इदानीं भवति एव स्यात्, न तु मयि । अहं कांश्चन प्रश्नान् पृच्छामि । उत्तरं ददातु तावत्'' इति उक्तवान् ।

गोपालः कांश्चन प्रश्नान् पृष्टवान् । एकस्य अपि उत्तरं वक्तुम् अशक्तः रामशर्मा कोपेन - ''भवान् एव एतेषाम् उत्तरं वदतु'' इति उक्तवान् । गोपालः यथायोग्यम् उत्तरम् उक्तवान् ।

एतत् श्रुत्वा रामशर्मा - ''भवतः पाण्डित्यम् असाधारणम् । एतादृशं ज्ञानं मया प्रायः एतस्मिन् जन्मनि प्राप्तुं न शक्यते'' इति उक्तवान् ।

गोपालः ततः त्रिपुरानगरं गत्वा रागप्रियं दृष्ट्वा नमस्कृत्य - ''भवान् किञ्चन गीतं गायतु । तत्र कोऽपि दोषः अस्ति चेत् अहं सूचयिष्यामि'' इति उक्तवान् ।

रागप्रियः उत्तमरीत्या एकं गीतं गीतवान् । तत् श्रुत्वा गोपालः - ''सामान्यानां दृष्ट्या एतत् उत्तमम् एव स्यात् नाम । किन्तु विद्वांसः अत्र दोषं पश्यन्ति एव'' इति उक्त्वा तदेव गीतं परिष्कृतरागेण गीतवान् ।

तदा रागप्रियः आदरेण नमस्कृत्य - ''महानुभाव ! भवता इदानीं यत् नैपुण्यं प्रदर्शितं तादृशं नैपुण्यं प्रायः आजीवनं प्रयत्नः कृतः चेदपि मया न प्राप्येत । पूर्वं भवद्विषये यत् उक्तं तद्विषये क्षमां याचे'' इति उक्तवान् ।

अनन्तरं गोपालः विजयपुरीं गत्वा सुरेखं दृष्ट्वा तेन रचितेषु चित्रेषु यथोचितं परिवर्तनं सूचितवान् । तस्मात् चित्रे यत् अपूर्वं सौन्दर्यं दृष्टं ततः आश्चर्यचकितः सुरेखः - ''भवान् देवांशसम्भवः एव । एतादृशं चित्रं

मानवमात्रेण प्रायः लेखितुं न शक्यते'' इति उक्तवान् ।

'इदानीम् अहं पूर्णरूपेण महापुरुषः जातः अस्मि' इति भावनां प्राप्तवान् गोपालः । 'एतस्याः श्रेष्ठतायाः आधारेण मया प्रभूतं धनं सम्पादनीयम्' इति निश्चितवान् सः । विजयपुरे विमलानन्दः नाम धनिकः आसीत् । सः पण्डितान् आदरेण पश्यन् पुरस्कारदानेन सत्करोति स्म । गोपालः तस्य समीपं गत्वा स्वस्य पाण्डित्यं प्रदर्शितवान् ।

गोपालस्य पाण्डित्यं दृष्ट्वा सन्तुष्टः विमलानन्दः - ''श्रीमन् ! पण्डितस्य भवतः दर्शनतः मम जीवनं सार्थकं जातम् । अद्यावधि कस्मैचित् अपि अदत्तम् अपूर्वं पारितोषिकं भवते दास्यामि'' इति उक्त्वा एकं ताडग्रन्थं दत्त्वा - ''वेदव्यासस्य कथनस्य अनुगुणं गणपतिना यः महाभारतग्रन्थः लिखितः सः एव एषः । पूर्वार्जितपुण्यवशात् अस्मत्पूर्वजः कश्चित् एतं ग्रन्थं प्राप्तवान् आसीत् । ततः आरभ्य अद्यपर्यन्तं स च ग्रन्थः सुरक्षिततया स्थापितः आसीत् मम गृहे । तम् एव भवते अर्पितवान् अस्मि'' इति उक्तवान् ।

प्रभूतं धनं प्राप्येत इति निरीक्षितवता गोपालेन ताडग्रन्थः प्राप्तः आसीत् । एतस्मात् खिन्नः जातः सः । धनं याचितुम् अशक्नुवन् गोपालः ततः प्रस्थितवान् । तत्समये विमलानन्दः - ''श्रीमन् ! पार्श्वग्रामे मम सहोदरः भ्रमरानन्दः निवसति । सङ्गीतं तस्य प्राणायते । भवान् तु सङ्गीते अपि निपुणः । पाण्डित्येन भवान्



मां यथा तोषितवान् तथा यदि मम सहोदरम् अपि तोषयेत् तर्हि वरं स्यात्'' इति सूचितवान् ।

गोपालः भ्रमरानन्दसमीपं गत्वा स्वस्य सङ्गीतनैपुण्यं प्रदर्शितवान् । एतत् श्रुत्वा नितरां सन्तुष्टः भ्रमरानन्दः - ''भवादृशः सङ्गीतविद्वान् इतः पूर्वं मया न दृष्टः एव । यदि अहं धनं दद्यां तर्हि भवतः प्रतिभायाः अवमाननं कृतं स्यात् । अतः अद्यावधि अन्यस्मै कस्मैचित् अपि यादृशम् उपायनं न दत्तं तादृशं ददामि भवते'' इति उक्त्वा एकां लघुकांस्यपेटिकां दत्तवान् ।

''एषा कांस्यपेटिका अस्मत्पूर्वजैः कथञ्चित् प्राप्ता । एताम् उद्घाट्य कर्णस्य समीपं नयामः चेत् त्यागराजस्य कण्ठस्वरः श्रूयते । एतस्य स्वामिना यस्य रागस्य



खलु ?' इति खिन्नं गोपालम् उद्दिश्य - "श्रीमन् ! भवतः योग्यतानुगुणं धनं दातुम् एतद्देशस्य प्रभुः एव समर्थः, न अन्ये । अतः मम निवेदनं यत् 'भवान् महाराजं दृष्ट्वा सत्कारं प्राप्नोतु' इति । सत्काररूपेण यत् धनं प्राप्यते तत् गौणं भावयन्ति कलाविदः इति अहं जानामि । तथापि राजसत्कारः गौरववर्धकः इत्यतः एवं सूचयन् अस्मि" इति उक्तवान् ।

'एषः उपायः आश्रितः चेत् धनम् अवश्यं प्राप्येत' इति चिन्तयन् गोपालः तदनन्तरदिने एव राजधानीं गतवान् । कस्याञ्चित् धर्मशालायां वासं कृतवान् च । तस्यां धर्मशालायां रामशर्मा, रागप्रियः, सुरेखः चापि तेन दृष्टाः ।

राजा कलाविदां निमित्तं स्पर्धाम् आयोजितवान् आसीत् । ये जयं प्राप्नुवन्ति ते विशेषतः सत्क्रियन्ते इति राज्ञा घोषणा कृता आसीत् । अतः एव रामशर्मादयः तत्र आगताः आसन् ।

गोपालस्य आगमनं दृष्ट्वा ते म्लानमुखाः सन्तः - "अन्यैः सह स्पर्धमानाः वयं कदाचित् जयं प्राप्नुयाम । किन्तु महाशक्तिमन्तं भवन्तं जेतुं वयं सर्वथा न शक्नुमः । अतः अद्यैव प्रतिगमिष्यामः वयम्" इति उक्तवन्तः ।

'एते स्वप्रयत्नेन स्वक्षेत्रे प्रावीण्यं सम्पादितवन्तः सन्ति । अहं तु अदृष्टकारणतः विद्यासु नैपुण्यं प्राप्तवान् अस्मि' इति चिन्तयन् गोपालः तान् उद्दिश्य - "भवन्तः त्रयः अपि मम गुरुतुल्याः । भवत्कारणतः एव मया एषा उन्नतिः

श्रवणस्य इच्छा प्राप्यते सः एव रागः त्यागराजस्वरेण श्रूयते तेन" इति उक्तवान् भ्रमरानन्दः ।

धनम् आवश्यकम् इति प्रष्टुम् अशक्नुवन् ततः प्रस्थितवान् गोपालः । तदा भ्रमरानन्दः - "श्रीमन् ! मम अग्रजः चित्रानन्दः पार्श्वग्रामे निवसति । तं पश्यतु भवान् । चित्रकलानैपुण्येन तं तोषयतु भवान् । सः कलां प्राणप्रियां भावयति" इति सूचितवान् ।

गोपालः चित्रानन्दसमीपं गतवान् । गोपालस्य चित्रकलाप्रावीण्यं दृष्ट्वा सन्तुष्टः चित्रानन्दः अपूर्वम् एकं चित्रं तस्मै दत्तवान् । चित्रस्य वर्णाः कदापि कान्तिहीनाः यथा न भवेयुः तथा व्यवस्था कृता आसीत् । 'अत्रापि धनं न प्राप्तं

प्राप्ता । अतः अहं स्पर्धायां भागं न ग्रहीष्यामि । यदि भवन्तः जयं न प्राप्नुयुः तर्हि जितवतः अहं जेष्यामि'' इति उक्तवान् ।

एतत् श्रुत्वा रामशर्मा, रागप्रियः, सुरेखः च सन्तुष्टाः । अनन्तरकाले प्रवृत्तासु स्पर्धासु ते एव जयं प्राप्तवन्तः । तेषु एकैकः अपि पारितोषिकरूपेण लक्षं सुवर्णनाणकानि प्राप्तवान् ।

ततः प्रतिगमनसमये ते त्रयः अपि गोपालम् उद्दिश्य - ''वयं भवते किञ्चित् धनं दातुम् इच्छामः'' इति उक्तवन्तः । तदा गोपालः - ''ललाटे यथा लिखितं भवति तथा धनं प्राप्यते । अहं दानरूपेण धनं प्राप्तुं न इच्छामि'' इति उक्तवान् ।

''दानरूपेण धनस्वीकरणं मास्तु । धनं स्वीकृत्य किमपि साहाय्यं करोतु'' इति उक्तवन्तः ते त्रयः ।

तेषां विचारः आसीत् यत् अस्माभिः अज्ञातः अस्मद्विद्यासम्बन्धी कोऽपि विचारः गोपालतः ज्ञातव्यः इति ।

किन्तु तेषां कथनस्य तात्पर्यम् अन्यथा गृह्णन् गोपालः - ''साहाय्यार्थं मत्समीपे किम् अस्ति ? वेदव्यासीयः ताडग्रन्थः, त्यागराजीयः गानपेटिका, अजन्तचित्रं च अस्ति, तावदेव'' इति उक्तवान् ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन्तः ते - ''के ते ? किं तेषां वैशिष्ट्यम् ?'' इति कुतूहलेन पृष्टवन्तः ।

गोपालः स्वसमीपे स्थितानां वस्तूनां वैशिष्ट्यं, तेषां प्राप्तिवार्तां च विस्तरेण तान् निवेदितवान् । तदा ते त्रयः अपि आश्चर्यम् अनुभवन्तः - ''प्रभूतेन धनेन अपि प्राप्तुम् अनर्हाणि एतानि । अस्मासु एकैकः अपि लक्षं सुवर्णनाणकानि ददाति भवते । भवान् तानि अस्मभ्यं ददातु'' इति प्रार्थितवन्तः ।



गोपालः किङ्कर्तव्यतामूढः जातः । ''वयं तत्र दृश्यमानस्य कूपस्य पार्श्वे स्थितस्य वटवृक्षस्य छायायाम् उपविशाम । तत्र मम निर्णयं वदामि अहम्'' इति उक्त्वा ततः प्रस्थितः गोपालः बहुधा चिन्तितवान् । यदा वटवृक्षः प्राप्तः तदा - ''संन्यासिनः वचनस्य तात्पर्यम् इदानीम् अवगतम् अस्ति मया । सः संन्यासी कः इत्यादिकं भवन्तः मा पृच्छन्तु कृपया । भवन्तः वास्तविककलाविदः । अतः एतानि अपूर्ववस्तूनि भवतां सकाशे तिष्ठन्ति चेदेव औचित्यम्'' इति उक्त्वा ताडग्रन्थं,

रागपेटिकां, चित्रं च दत्त्वा एकैकस्मात् अपि लक्षं सुवर्णनाणकानि प्राप्य स्वग्रामं प्रति गतवान् ।

वेतालः एवं कथां समाप्य अवदत् - "राजन् ! प्रभूतं धनं सम्पादनीयम्, महापुरुषत्वं च प्राप्तव्यम् इति उद्देशेन गोपालः बहून् सम्प्रार्थ्य निराशां प्राप्य अन्ते संन्यासिनः अनुग्रहतः महापण्डितम् अपि जेतुं शक्तिं प्राप्तवान् । किन्तु शक्तेः उपयोगः तेन योग्यक्रमेण न कृतः इति भाति मम । यदि राजसभायां स्पर्धायां सः भागम् अग्रहीष्यत् तर्हि पुरस्कारम् अवश्यं प्राप्स्यत् । तथापि कलाविद्भ्यः अपूर्वाणां वस्तूनां दानात् यानि त्रिलक्षं सुवर्ण-नाणकानि प्राप्तानि ततः एव सन्तुष्टः जातः सः । अत्र तदीयः अविवेकः मन्दमतित्वं च कारणं खलु ? किमर्थं सः अपूर्वाणि वस्तूनि तेभ्यः दत्तवान् ? किं तेषां वस्तूनां मूल्यं न जानाति स्म सः ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - "संन्यासी महापण्डितानाम् अपि जयार्थम् अपेक्षितां शक्तिं यद्यपि गोपालाय दत्तवान् आसीत्, तथापि धनप्राप्तिविषये कश्चन नियमः सूचितः आसीत् तेन । 'स्वश्रेष्ठताकारणतः एव भवान् धनं सम्पादयितुम् अर्हति, न तु पाण्डित्यबलात्' इति उक्तवान् आसीत् सः । एतत् जानन् एव गोपालः रामशर्मादीनां जयार्थं प्रयत्नं न कृतवान् । एवं कुर्वन् सः स्वश्रेष्ठतां निरूपितवान् । 'मत्समीपे स्थितानि वस्तूनि कलाकाराणां दृष्ट्या अत्यपूर्वाणि । तानि ते प्राणेभ्यः प्रियं भावयेयुः । मम तु पाण्डित्यं न प्रयत्नेन प्राप्तम्, अपि तु आकस्मिकं तत् । अतः तानि वस्तूनि यदि समर्थकलाविदां समीपे स्युः तर्हि एव शोभा' इति चिन्तयित्वा सः तानि तेभ्यः दत्तवान् । ते यानि त्रिलक्षं सुवर्णनाणकानि प्रीत्या दत्तवन्तः ततः एव तृप्तः जातः च" इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# आन्ध्रतीरम्

रचना - मीरा नायर् ◆ चित्राणि - गोपकुमारः




मछलीपत्तनस्य ईशान्यदिशि 'गोदावरी डेल्टा' अस्ति । दक्षिणभारते एव दीर्घा नदी गोदावरी । एषा 'दक्षिणगङ्गा' इति प्रसिद्धा अस्ति । गोदावरी डेल्टातः ईशान्यदिशि यानम् इति नगरम् अस्ति ।

यानं ३४ च.कि.मी.विस्तीर्णा नगरी । एषा बहुकालं फ्रेञ्चशासनाधीना आसीत् । अधुना केन्द्रशासितप्रदेशस्य पाण्डिचेरि-राज्यस्य अङ्गभूता अस्ति ।

अस्याः नगर्याः अनतिदूरे उत्तरदिशि नरसापुरं नाम ग्रामः अस्ति । तत्र विद्यमानेन भावनारायणस्वामिनः देवालयस्य कारणेन अयं ग्रामः प्रसिद्धिं गतः विद्यते ।

अस्य देवालयस्य विषये काचित् प्रसिद्धा पुराणकथा अस्ति । सर्पराजस्य अनन्तस्य माता कदाचित् सर्पान् उद्दिश्य कोपेन - 'भवतां सर्वनाशः भवतु' इति शापं दत्तवती । तस्याः शापवशात् सर्वे सर्पाः एकस्मिन् यज्ञकुण्डे पतित्वा मृतवन्तः । तस्मिन् समये सर्पराजः अनन्तः तत्र न आसीत् । अचिरात् एव प्रत्यागतः सः प्रवृत्तं सर्वं ज्ञात्वा नितरां खिन्नः अभवत् । 'मृताः सर्वे सर्पाः पुनर्जीवनीयाः' इति आशयेन सः महाविष्णुम् उद्दिश्य उग्रं तपः तप्तवान् । अनन्तः येन रूपेण विष्णुं मनसि भावितवान् तेनैव रूपेण विष्णुः तस्य पुरतः प्रत्यक्षः अभवत् । अतः एव तस्य देवस्य भावनारायणस्वामी इति नाम आगतम् । अनन्तः तत्रैव एकं देवालयं निर्माय देवं प्रतिष्ठापितवान् इति स्थलपुराणात् ज्ञायते ।

इतः पुनः किञ्चिद्दूरे उत्तरदिशि गच्छामः चेत् वयं काकिनाडनगरं प्राप्नुमः । इदम् एकं लघु नौकास्थानम् । इतः कार्पासः, कलायः, शर्करा, तमाखुः इत्यादीनि अन्यदेशान् प्रति प्रेष्यन्ते । १९२३

काकिनाड - नौकास्थानम्



तमे वर्षे इतिहासप्रसिद्धा भारत-राष्ट्रिय-कांग्रेस्-महासभा अपि काकिनाडनगरे एव प्रवृत्ता ।

काकिनाडतः १७ कि.मी. दूरे विद्यमानं नगरं एव द्राक्षारामः । 'दाक्षाराम' इति तु एतस्य शुद्धं नाम । दक्षसम्बद्धः आरामः इति तस्य पदस्य अर्थः । दक्षप्रजापतिः तत्र यज्ञं कृतवान् इति कारणेनैव तस्य दाक्षारामः इति नाम आगतम् इति जनाः वदन्ति ।

दक्षप्रजापतेः पुत्री दाक्षायणी पितुः विरोधे सत्यपि परमेश्वरम् ऊढवती । पश्चात् कदाचित् दक्षः कश्चित् महान्तं यागम् आरब्धवान् । तदर्थं सर्वान् देवान् आहूतवान् सः । परं परमेश्वरं तु न आहूतवान् एव । यद्यपि आह्वानं न आसीत् तथापि यागः द्रष्टव्यः इति कुतूहलेन दाक्षायणी एकाकिनी एव तत्र गतवती । दक्षः आगतां तां न केवलम् औदासीन्येन दृष्टवान्, अपि तु तत्र अविद्यमानं तस्याः पतिं सर्वेषां पुरतः अवाच्यशब्दैः निन्दितवान् । एतत् अपमाननं सोढुम् अशक्ता सा दाक्षायणी यज्ञकुण्डे एव पतित्वा प्राणत्यागं कृतवती । एतं विषयं ज्ञात्वा परमेश्वरः बहु कुपितः अभवत् । तस्य स्वेदबिन्दुभिः उत्पन्नः वीरभद्रः दक्षस्य यागं नाशयित्वा, दक्षप्रजापतिं च मारयित्वा परमेश्वरस्य कोपं शामितवान् इति कथा पुराणे प्रसिद्धा अस्ति ।



द्राक्षारामामन्दिरम्

कविसार्वभौमस्य श्रीनाथस्य 'भीमखण्डनामकस्य' तेलुगुकाव्यस्य रचनायाः अपि द्राक्षारामस्य भीमेश्वरः एव प्रेरणादाता इति श्रूयते । तेलुगुभाषायाः इतिहासः ज्ञापयति यत् १४ शतकस्य महाकविः श्रीनाथः एव 'तेलुगुक्षेत्रस्य स्वतन्त्ररचनायाः मूलपुरुषः' इति । अस्य शिवालयस्य प्राङ्गणे एव मुस्लिं-भक्तस्य सय्यद्षाबाजि-आलिवर्यस्य स्मारकम्(मसीदि) अपि अस्ति ।



राजमण्ड्रीस्थः रेल्यान-सेतुमार्गः

काकिनाडस्य पश्चिमदिशि गोदावरीनदीतीरे 'राजमहेन्द्रवरम्' इति प्रसिद्धा राजमण्ड्रीनगरी विद्यते । तेलुगुभाषायाः आदिकाव्यस्य आन्ध्रमहाभारतस्य रचयिता नन्नयभट्टः राजमहेन्द्रवरस्य चक्रवर्तिनः आस्थानकविः आसीत् । सांस्कृतिककेन्द्रं वाणिज्यकेन्द्रं च सती राजमहेन्द्रवरनगरी अद्य प्रवृद्धा अस्ति । रत्नकम्बलानां श्रीगन्धनिर्मितवस्तूनां च निर्माणविषये इदं नगरं प्रसिद्धं जातमस्ति । अत्रत्यः गोदावरीनद्याः उपरि निर्मिताः धूमशकटसेतुः अस्माकं देशे 'द्वितीयः दीर्घः सेतुः' इति प्रसिद्धिं गतः अस्ति ।

राजमण्ड्रीतः उत्तरे प्रयाणेन वयं विशाखपत्तनं प्राप्नुमः । तस्य पश्चिमदिशि राटर्ड्याम्, पूर्वदिशि टोक्यो च अस्ति । अनयोः मध्ये विद्यमानं महत् नौकास्थानम् एव विशाखपत्तनम् । पराक्रमस्य अधिपतेः विशाखस्य नाम्ना अस्य नगरस्य 'विशाख' इति नाम आगतम् अस्ति । अत्रत्ये तीरे पूर्वं कदाचित् वैशाखीदेवालयः आसीत् इति श्रूयते ।

ब्रिटिष्जनाः एतत् महानौकास्थानरूपेण परिवर्तितवन्तः । ततः पूर्वम् इदं धीवराणां लघु ग्रामः आसीत् ।

अद्य विशाखपत्तनम् औद्योगिकनगरं सत् अपि प्रवृद्धम् अस्ति । अस्माकं देशस्य महती नौका-निर्माणसंस्था 'हिन्दुस्थान् षिप् याई लिमिटेड्' अत्र १९५२ तमे वर्षे निर्मिता । एतस्मिन् नगरे स्थितं 'डाल्फिन्स् नोस्' तावत् जगति सुप्रसिद्धम् । ३५८ कि.मि. उन्नता शिला समुद्रस्य अन्तः प्रविष्टा सती डाल्फिन्मृगस्य मुखमिव दृश्यते । महत्याः अस्याः शिलायाः उपरि दीपगृहं निर्मितम् अस्ति । अस्य प्रकाशः समुद्रे ६५ कि.मी. दूरपर्यन्तं दृश्यते । अस्माकं देशे विद्यमानः अत्यधिक-शक्तिमान् दीपस्तम्भः एषः एव ।

विशाखपत्तनस्थं नौकानिर्माणकेन्द्रम्



विशाखपत्तनस्य शाखा-नगरम् इव स्थितं वाल्टेर् इतः ३ कि.मी. दूरे अस्ति । अत्रत्यं वायुमण्डलं शीतलं विद्यते इति कारणेन इदम् आरोग्यकेन्द्ररूपेण प्रसिद्धं जातम् अस्ति । अत्रैव आन्ध्रविश्वविद्यालयः अपि अस्ति । सुवर्णवर्णसिकताभिः युक्तम् अत्रत्यं समुद्रतीरम् अतीव सुन्दरम् अस्ति । रामकृष्णाश्रमस्य समुद्रतीरम्, ऋषिपर्वतः, लासन्सुबे समुद्रतीरम् इत्येतैः त्रिभिः समुद्रतीरैः विशाखपत्तनस्य शोभा विशेषतः वर्धिता अस्ति ।

विशाखपत्तनात् १४ कि.मी. दूरे सिंहाचलक्षेत्रम् अस्ति । अत्र पर्वतस्य उपरि नरसिंहस्वामिनः मन्दिरम् अस्ति । इदं मन्दिरं १४ शतके निर्मितम् । ''हिरण्यकशिपुः नाम राक्षसराजः महता अहङ्कारेण विष्णुभक्तिं निषिद्धवान् । विष्णुभक्तान् दण्डितवान् च । हिरण्यकशिपुः नारायणस्य नामस्मरणं कुर्वन्तं




पुत्रं प्रह्लादं दृष्ट्वा नितरां कुपितः अभवत् । तदर्थम् आदौ सः नयेन उक्तवान्, पश्चात् भायितवान् च । किन्तु ततः प्रयोजनं न अभवत् । अन्ते स्वपुत्रमेव मारयितुम् उद्युक्तः अभवत् हिरण्यकशिपुः । किन्तु केनापि प्रकारेण तं मारयितुं सः न शक्तः । अन्ते सः प्रह्लादं समुद्रे क्षिप्त्वा तस्य उपरि सिंहाचलपर्वतमेव संस्थापितवान् । किन्तु तस्याः आपदः अपि विष्णुः तं रक्षितवान् । तावदेव न, हिरण्यकशिपोः एतादृशान् दुर्व्यवहारान् ज्ञात्वा विष्णुः नरसिंहावतारेण आगत्य तं संहृतवान् । तथापि विष्णोः कोपः शान्तः न अभवत् । देवाः प्रसन्नतार्थं तं प्रार्थितवन्तः । प्रियभक्तः प्रह्लादः अपि तं बहुधा स्तुतवान् । तथापि तदीयः कोपः तु न शान्तः । अन्ते परमेश्वरः शरभपक्षिणः वेषेण आगत्य उग्रनरसिंहं शामितवान्'' इति काचित् कथा पुराणेषु दृश्यते ।

सिंहाचलमन्दिरस्य गर्भगृहे विद्यमानस्य नरसिंहस्वामिनः उग्ररूपस्य शमनार्थं विग्रहः आवर्षं श्रीगन्धलेपनेन आच्छाद्यते । वर्षे एकवारम् एव 'चन्दनयात्रासमये' श्रीगन्धस्य आवरणं निष्कासयन्ति । एप्रिल्-मे-मासयोः मध्ये कदाचित् प्रवर्तमानस्य अस्य उत्सवस्य समये एतस्य देवस्य दर्शनाय एव देशस्य विविधेभ्यः कोणेभ्यः जनाः गणरूपेण आगच्छन्ति ।






# स्वप्नः साकारतां गतः

बाल्ये एव मातापितृवियोगं प्राप्तवान् सुरेशः पितामहेन पोष्यमाणः सन् तारुण्यं प्राप्तवान् । पितामहः तं महता प्रेम्णा पालितवान् आसीत् इत्यतः अष्टादशे अपि वयसि सः गृहस्य कष्टसुखादिकम् उत्तरदायित्वं वा न जानाति स्म । अथ कदाचित् तदीयः पितामहः रोगग्रस्तः जातः । तस्य चिकित्सार्थं गृहे धनं किञ्चिदपि न आसीत् । 'इदानीं किं करणीयम् ?' इति समस्या उत्पन्ना सुरेशस्य पुरतः । 'गृहविक्रयणात् ऋते अन्यः कोऽपि मार्गः नास्ति' इति निर्णीतवान् सुरेशः ।

सुरेशस्य आशयं ज्ञात्वा पितामहः उक्तवान् - ''वत्स ! जीर्णकायस्य मम निमित्तं गृहं विक्रीयते चेत् अग्रे भवान् आश्रयहीनः भवेत् । जीवनं दुस्सहं भवेत्'' इति ।

''भवन्तं विना अहं जीवितुम् एव न शक्नोमि । धनं कथञ्चित् सम्पादयितुं शक्येत । किन्तु प्राणाः सकृत् गताः चेत् पुनः प्राप्तुं न शक्याः खलु ? महता व्ययेन वा अहं भवतः चिकित्सायाः व्यवस्थां करिष्यामि'' इति सगद्गदम् उक्तवान् सुरेशः ।

अनन्तरं सः गृहं विक्रीय प्राप्तेन धनेन वैद्यम् आनाय्य पितामहस्य चिकित्सां कारितवान् । तथापि मासाभ्यन्तरे पितामहः दिवं गतः । गृहविक्रयणेन प्राप्तस्य धनस्य कश्चन भागः सुरेशस्य समीपे आसीत् । तत् व्ययीकृत्य पितामहस्य अन्त्यकर्माणि कृतवान् सः ।

'अग्रे किम् ?' इति प्रश्नः इदानीं बाधते स्म सुरेशम् । एकदा सः ग्रामात् बहिः स्थितायाः शिलायाः उपरि उपविश्य स्वस्य धनस्य गणनां कुर्वन् आसीत् । आहत्य विंशतिः रजतनाणकानि अवशिष्टानि आसन् । 'एतदाधारेण कथं जीवनं

सुभद्रा



पितामहेन उक्तं वचनं स्मृतवान् सुरेशः । 'एतस्मिन् ग्रामे एव यदि तिष्ठामि तर्हि युवराज्ञ्याः परिणयः असाध्यः' इति चिन्तयन् सुरेशः तस्मिन् एव दिने राजधानीं प्रति प्रयाणम् आरब्धवान् । मार्गे आहारादीनां निमित्तं धनव्ययः कृतः आसीत् इत्यतः राजधानीप्राप्तिसमये त्रीणि नाणकानि अवशिष्टानि आसन् सुरेशस्य समीपे । राजधानीं प्राप्य बुभुक्षानिवारणार्थं सः एकम् उपाहारमन्दिरं प्रविष्टवान् ।

तस्य उपाहारमन्दिरस्य स्वामिनी पद्मावती । यदा सुरेशः तत् उपाहारमन्दिरं प्रविष्टवान् तदा तत्र दशाधिकजनाः भोजने निरताः आसन् । पद्मावती सुरेशतः एकं रजतनाणकं स्वीकृत्य तस्मै अपि भोजनं परिवेषितवती । सुरेशः भोजनम् आरब्धवान् ।

करणीयम् ?' इति यावत् सः चिन्तयन् आसीत् तावता तेन मार्गेण गच्छन् कश्चन व्याधः तत्समीपम् आगत्य तदीयं मुखं क्षणकालं यावत् निर्निमेषं दृष्ट्वा - "भवतः मुखस्य दर्शनात् भासते यत् युवराज्ञीपरिणययोगः अस्ति भवतः इति । मित्र ! अलं चिन्तया । उत्तमानि दिनानि दृश्यन्ते भवता" इति उक्त्वा सुरेशस्य पुरतः स्थितात् नाणकराशितः एकं नाणकं स्वीकृत्य मौनेन ततः निर्गतवान् ।

आदिनं व्याधस्य वचनानि एव सुरेशस्य मनसि आवर्तमानानि आसन् । रात्रौ तेन स्वप्ने स्वशिरसि वज्रखचितं किरीटम् अपि दृष्टम् । कुक्कुटरवस्य श्रवणात् तस्य जागरणम् अभवत् । 'उषःकाले दृष्टः स्वप्नः अवश्यं साकारतां गमिष्यति' इति

तत्काले कश्चित् पद्मावतीं पृष्टवान् - "भवत्याः मुखे कश्चन आतङ्कः दृश्यते खलु ? गतसन्दर्भे यदा अहम् अत्र आगतः तदा भवती उक्तवती आसीत् यत् राजा अर्बुदरोगेण पीड्यमानः अस्ति इति । किं तस्य रोगः इतोऽपि न उपशान्तः ?" इति ।

तदा पद्मावती दीर्घं निश्श्वस्य - "प्रतिवेशिराज्यस्य आस्थानवैद्यस्य कृपया राज्ञः अर्बुदरोगः निर्मूलतां गतः । किन्तु मम चिन्ता युवराज्ञ्याः विवाहविषये । सा तदा तदा एकं स्वप्नं पश्यति । स्वप्ने कश्चित् देवीमन्दिरं गच्छन्तीं तां सर्पदंशनात् रक्षति । स्वप्नानुगुणं यः मां सर्पदंशनात् रक्षति तम् एव परिणेष्यामि इति वदति सा । अद्यावधि

देवीमन्दिरगमनमार्गे सर्पशिशुः अपि केनापि न दृष्टः । न जाने, तस्याः परिणयः कदा भविष्यति इति'' इति उक्तवती ।

एतत्सर्वं श्रुत्वा सुरेशः चिन्तितवान् यत् सौभाग्यवशात् युक्ते एव काले मया राजधानीं प्रति आगतम् इति । भोजनं समाप्य सः अहितुण्डिकस्य अन्वेषणार्थं निर्गतवान् । कुत्रचित् अहितुण्डिकः कश्चन तेन दृष्टः अपि । सः तं पृष्टवान् - ''निष्कासितदन्तः कश्चन सर्पः आवश्यकः मम । तादृशः सर्पः अस्ति वा भवत्समीपे ?'' इति ।

''कुतो न ? रजतनाणकद्वयमितं मूल्यं तस्य'' इति उक्तवान् अहितुण्डिकः ।

स्वसमीपे यत् नाणकद्वयम् अवशिष्टम् आसीत् तत् अहितुण्डिकाय दत्त्वा तेन दत्तं सर्पं कण्डोले संस्थाप्य देवीमन्दिरगमनमार्गे कस्यचित् गुल्मस्य पृष्ठतः उपविष्टवान् सुरेशः। गमनागमनकर्तॄन् जागरूकतया पश्यन् स्थितवान् च ।

सूर्यास्तः जातः । अन्धकारप्रसारः अपि आरब्धः । अत्रान्तरे राजवेषधारिणी काचित् सुन्दरी तरुणी तेन मार्गेण आगता । सुरेशः झटिति उत्थाय सर्पं तस्याः उपरि क्षिप्तवान् । सर्पः तस्याः स्कन्धे पतितः । एतस्मात् दिग्भ्रान्ता सा उच्चैः आक्रोशनं कृतवती । तत्क्षणे एव सुरेशः गुल्मात् बहिः आगत्य उत्प्लुत्य तस्याः पार्श्वे तिष्ठन् लीलया सर्पम् आकृष्य ततः क्षिप्तवान् । कम्पमानशरीरा सा सुन्दरी क्षणकालस्य अनन्तरम् - ''अहो ! मम स्वप्नः साकारतां



गतः । भवान् एव मम पतिः'' इति सुरेशम् उक्तवती कटाक्षेण पश्यन्ती ।

''भवत्याः वचनस्य किं तात्पर्यम् ?'' इति आश्चर्यमिश्रितस्वरेण पृष्टवान् सुरेशः किमपि अजानन् इव ।

तदा सा स्वस्य स्वप्नस्य वार्तां निवेद्य - ''यः मां सर्पात् रक्षति सः एव परिणेतव्यः इति मया निर्णयः कृतः अस्ति । यदि भवान् मां न परिणयेत् तर्हि अहम् आजीवनं कन्यारूपेण एव तिष्ठेयम्'' इति उक्तवती ।

एतत् श्रुत्वा महता आनन्देन सुरेशः तस्याः हस्तं गृहीतवान् । ततः तौ मन्दिरं गत्वा अर्चकेन दत्तयोः मालयोः परस्परसमर्पणेन पतिपत्न्यौ जातौ । सुरेशस्य हस्तं गृहीत्वा एव सा सुन्दरी पर्वतात् अधः

आगतवती । सर्वं स्वप्नम् इव भावयन् सुरेशः ताम् अनुसृतवान् । यदा सा पद्मावत्याः उपाहारमन्दिरं प्रविष्टवती तदा वास्तवप्रपञ्चम् आगतवान् सः ।

"भवती अत्र किमर्थम् आगता ? एषा किं ज्ञातपूर्वा भवत्या ?" इति आश्चर्येण पृष्टवान् सुरेशः ।

तदा सा तरुणी हसन्ती - "पूर्वं कदाचित् कस्मिंश्चित् रथयात्रावसरे लब्धां माम् एषा पद्मावती एव महता प्रेम्णा पोषितवती । अतः एतस्याः पुत्री अस्मि अहम्" इति उक्तवती ।

"एवं तर्हि भवती युवराज्ञी न ?" इति पुनरपि आश्चर्येण पृष्टवान् सुरेशः ।

"मम नाम एव 'युवराज्ञी' इति" इति उक्तवती सुन्दरी ।

"एवं स्थिते भवत्याः समीपे राज-वस्त्राणि कथम् ?" इति पृष्टवान् सुरेशः ।

तदा युवराज्ञी हसन्ती - "अहं युवराज्ञ्याः आत्मीयसख्याः सखी अस्मि । अतः युवराज्ञ्याः मम च आत्मीयपरिचयः । तस्याः प्राचीनवस्त्राणि अहं तदा तदा प्राप्नोमि । तेषां धरणे मम विशेषरुचिः" इति उक्तवती युवराज्ञी ।

एतयोः सम्भाषणं पाकशालायां स्थित्वा एव श्रुतवती पद्मावती बहिः आगत्य - "वत्से ! मम शरीरस्य बलं क्षीयमाणम् अस्ति । मम एतस्य उपाहारगृहसाम्राज्यस्य योग्यः उत्तराधिकारी अद्य प्राप्तः अस्ति । इतः परम् एतस्य सर्वस्य अधिपतिः एषः एव" इति उक्तवती ।

"भवती सर्वदा वदति स्म खलु - 'आगतस्य सर्वस्य अपि वरस्य तिरस्कारं करोति भवती । न जाने, विवाहयोगः भवत्याः ललाटे लिखितः अस्ति वा न वा इति' इति ? अद्य तु भवती सन्तुष्टा स्यात् खलु ?" इति हसन्ती उक्तवती युवराज्ञी ।

तदा पद्मावती युवराज्ञ्याः कपोलं प्रीत्या ताडयन्ती - "मम यावान् सन्तोषः ततोऽपि दशगुणितः सन्तोषः प्राप्तः अस्ति खलु भवत्या ? यतः मनःसाम्राज्यस्य महाराजः एव प्राप्तः अस्ति भवत्या" इति उक्तवती ।

"आम् । अहम् अस्मि महाराजः । युवराज्ञ्याः पतिः महाराजः खलु भवेत् ? मम स्वप्नः एतेन प्रकारेण साकारतां गतः" इति सन्तोषेण हसन् उक्तवान् सुरेशः ।





## चन्दमामायाः

१. कस्यचित् जलचरस्य अस्थिभिः केचन श्वेताः दुरारोहाः पर्वताः सहजतया ये निर्मिताः तान् ?



समुद्रे वसतां केषाञ्चित् प्राणिनाम् अस्थ्नां निरन्तरं समुद्रस्य अधोभागे पतनात् अस्थिराशिः एव निर्मितः जातः । लक्षशः वर्षाणाम् अनन्तरं सः एव अस्थिराशिः शिलारूपं प्राप्य दुरारोहस्य शिखरस्य स्वरूपं प्राप्तवान् अस्ति । भूमेः चलनेन तानि शिखराणि उपरि आगतानि सन्ति ।

## प्रपञ्चे वयम् एतानि कुत्र द्रष्टुं शक्नुयाम ?

२. ये स्तूपसदृशाः सन्ति तान् कुसुलान् ?



अस्माकं देशे विद्यमानस्य अस्य कुसूलस्य द्वारम् अन्तस्तात् एव उद्घाटयितुं शक्यते । अतः यदा कुसूलः पूर्णः विद्यते तदा सः उद्घाटयितुं न शक्यते । १७ शतके यदा अस्मिन् प्रदेशे क्षामः भीकरः आसीत् तदा इस्ट् इण्डियासंस्थया अयं निर्मितः ।



३. यः विश्वे एव अत्यन्तम् उन्नतः अस्ति तं विग्रहम् ?

हस्तद्वयमपि उन्नीतवत्याः एकेन हस्तेन खड्गं गृहीत्वा मूर्तिमद्-गाम्भीर्यमिव दृश्यमानायाः कस्याश्चित् स्त्रियाः प्रतिमा एषा । अस्याः औन्नत्यं ८२ मीटर् ।



४. अग्निपर्वतस्य विच्छेदेन ये किरीटाकृतियुक्ताः पर्वताः जाताः येषु जनाः वसन्ति च तान् ?

सामान्यतः १० लक्षवर्षेभ्यः पूर्वं छिन्नविच्छिन्नेन केनचित् अग्निपर्वतेन निर्मितः अयं किरीटाकृतिपर्वतः विभिन्नेषु स्तरेषु निर्मितं नगरम् इव दृश्यते । एतेषु मृदुपर्वतेषु कर्तिताः गुहाः वसतिगृहरूपेण उपयुज्यमानाः सन्ति । मृदुषु एतेषु पर्वतेषु देवालयस्य गर्भगृहम्, आसन्दाः, उत्पीठिकाः, क्रैस्तदेवालयाः, आश्रमाः इत्यादयः सर्वे पर्वतं कर्तयित्वा एव निर्मिताः सन्ति ।

५. अतिमहान्तम् राष्ट्रियमृगालयम् ?

अस्मिन् मृगालये ४०० विधाः पक्षिणः, १५० जातीयाः पशवः, ५० विधाः मीनाः, ४० विधाः मण्डूकाः, ३४ विधाः सर्पाः च सन्ति । १९,४५५ च - कि.मी. विस्तीर्णे अस्मिन् मृगालये ७,००० गजाः, १,५०० सिंहाः, ५०० तरक्षवः, २५० चीटातरक्षवः च सन्ति ।



## चित्रसमस्या

१. एकपार्श्वतः दृश्यमानायाः कस्याश्चित् सुन्दर्याः मुखमिदम् । परम् अस्मिन् अन्यत् मुखमपि निहितमस्ति । तत् किम् इति शोधयितुम् शक्नुवन्ति किं भवन्तः ?





२. कश्चित् युवकः महता वेगेन द्विचक्रिकां चालयन् अस्ति अत्र । परं एतस्य चित्रस्य लेखनसमये चित्रकारेण कश्चन दोषः कृतः अस्ति ? सः कः इति किम् अभिज्ञातुम् अर्हन्ति भवन्तः ?

## कथासमस्या

**अत्र कथानिरूपणावसरे कश्चन दोषः कृतः अस्ति । सः कः इति किं वक्तुं शक्नुवन्ति भवन्तः ?**

### चक्रवर्तिनः उदारता

चन्द्रगुप्तस्य प्रपौत्रः चक्रवर्ती अशोकः एकस्मिन् सायङ्काले उद्याने सञ्चरन् आसीत् । तदा अकस्मात् एकः शिलाखण्डः आगत्य तस्य पृष्ठस्य उपरि पतितः । अनुक्षणं रक्षकाः शिलां क्षिप्तवन्तं जनं राज्ञः पुरतः आनीतवन्तः । अपराधिनी काचित् महिला आसीत् । सा भयेन कम्पमाना - "हे महाप्रभो, मम अपराधः क्षन्तव्यः । मम अपत्यानि आ प्रातः बुभुक्षया क्लान्ताः सन्ति । तेभ्यः दातव्यमिति उद्देशेन अहं बीजपूरकं पातयितुं शिलां क्षिप्तवती । सा लक्ष्यभ्रष्टा सती भवतः उपरि पतिता" इति दैन्येन उक्तवती ।



"अधुनैव एतस्यै शतं सुवर्णनाणकानि दत्त्वा प्रेषयन्तु" - इति मन्त्रिणं आज्ञापितवान् अशोकः ।

"महाप्रभो ! सा भवति शिलां क्षिप्तवती अस्ति । तदर्थं तस्याः दण्डः देयः । न तु एवं पुरस्कारः ........" इति किमपि वक्तुम् उद्युक्तः मन्त्री ।

"यदि तया क्षिप्ता शिला (लक्ष्यं) वृक्षम् एव ताडितवती स्यात् तर्हि सः वृक्षः तस्यै बीजपूरकम् अदास्यत् खलु । राजा अहं वृक्षस्य अपेक्षया अधिकः उदारः भवेयं खलु ?" इति उक्तवान् अशोकः मृदु हसन् ।

**उत्तरम्**

यूरोपदेशीयैः एव अस्माकं देशं प्रति बीजपूरकम् आनीतम् । अशोकचक्रवर्तिनः काले अस्माकं देशे बीजपूरवृक्षः न आसीत् ।



# विनोदप्रश्नाः

१. प्रतिपङ्क्ति चत्वारः यथा भवेयुः तथा १२ जनाः चतसृषु पङ्क्तिषु कथं स्थापनीयाः ?







२. भवन्तः वामभुजेन, वामपादेन च भित्तिं संस्पृश्य स्थितवन्तः सन्ति । तदा 'दक्षिण-पादम् उन्नयन्तु' इति यदि कश्चित् आदिशति तर्हि भवन्तः तथा कर्तुं किं शक्नुवन्ति ?

३. बुद्धौ कल्पितानां केषाञ्चित् प्राणिनां नामानि व्यत्यस्य स्थानान्तरे लिखितानि सन्ति । तानि स्वस्थाने योजयितुं शक्नुवन्ति किं भवन्तः ?







अ) यूनिकार्न्

आ) बासिलिस्क्

इ) ड्रागन्

ई) फोनिक्स्

४. द्वे रक्ते, त्रीणि कृष्णानि चेति आहत्य ५ शिरस्त्राणि सन्ति । रामः, मोहनः, विनयः इत्येते त्रयः अपि त्रीणि शिरस्त्राणि धृतवन्तः सन्ति । अन्ये द्वे शिरस्त्रे कुत्रचित् रहसि स्थापिते स्तः ।



विनयमोहनौ यथा दृश्येते तथा रामः उपविष्टवान् अस्ति । विनयः केवलं मोहनं द्रष्टुं शक्नोति । मोहनः तौ द्वौ अपि द्रष्टुं न शक्नोति । किन्तु ते परस्परं भाषितं श्रोतुं च शक्नुवन्ति । "भवान् कस्य वर्णस्य शिरस्त्रं धृतवान् ?" इति पृष्टे सति रामः – "अहं न जानामि" इति उत्तरं दत्तवान् । विनयः अपि स्वस्य शिरसि कीदृशं शिरस्त्रम् अस्ति इति न जानाति । तथापि रामस्य उत्तरं श्रुत्वा अनुक्षणं स्वस्य शिरसि कृष्णं शिरस्त्रम् अस्ति इति ऊहितवान् सः । कथं सः तथा निर्णीतवान् ?

चतुर्षु स्तरेषु विद्यमानान् 'P' आकारान् सुलभतया शयानः उलूकः इव कर्तुम् अर्हन्ति भवन्तः । तत् कथम् इति पश्यन्तु ।




## सुवर्णसमयस्य (१३) उत्तराणि

**विश्वे कुत्र ?**

१. नैर्ऋत्यफ्रान्स्देशस्य लास्काक्सल् मध्ये ।
२. राजस्थाने चित्तोडघड ।
३. आफ्रिका (मौण्ट किलि मञ्जारो)/उत्तर-बाञ्जानिया ।
४. मियान्मार् (बर्मा) ।
५. अमेरिकादेशस्य वाषिङ्गटन् डि.सि. ।

**चित्रसमस्या**

आफ्रिकादेशस्य वनेषु व्याघ्राः न सन्ति ।

**चित्रप्रश्नाः**

१. सौदि अरेबिया २. चैना ३. ईजिप्ट् ४. जर्मनी ५. बोलीविया ६.जिम्बाब्वे ७. स्पेयिन् ८. मियान्मार् ९. मडगास्कर्

**विनोदप्रश्नाः**

१. ५० पैसानाणकं, ५ पैसानाणकं च । एकं पञ्चशत्पैसानाणकं न, अपरं तु ५० पैसानाणकम् ।
२. शुकः बधिरः ।
३. कुटुम्बे आहत्य षड् जनाः सन्ति ।
४. 'ग्रीन्ल्याण्ड्' एव, तस्य अन्वेषणात् पूर्वमपि सः आसीत् एव ।
५. मित्रद्वयस्य एकदा नयनम् । तदा तु तिस्रः चिटिकाः एव अलम् । एकमेव मित्रं द्विवारं नीयते चेत् भवतः निमित्तं तु द्विवारं चिटिका क्रेतव्या एव ।
६. अन्तिमबालिकायै पेटिकया सह एव एकं सेवफलं दातव्यम् ।
७. असत्यम् । सः तादृशं सम्भाषणमेव न श्रुतवान् अस्ति । असत्यस्य वक्ता कोऽपि आत्मानं असत्यवादी इति न परिचाययति । अपि च सत्यवादी तु आत्मानं असत्यवादी इति न परिचाययति ।
८. येषां पादः दीर्घः अस्ति तेषाम् ।




पाण्डवानां वनवासावधिः समाप्तप्रायः आसीत् । इन्द्रः पाण्डवानां साहाय्यं कर्तुम् इच्छन् निश्चितवान् यत् कर्णस्य समीपं गत्वा कवचः कुण्डलं च याचनीयम् इति । एषः विषयः सूर्येण ज्ञातः ।

अथ एकदा उषःकाले सूर्यः कर्णस्य स्वप्ने प्रत्यक्षीभूय उक्तवान् - "कर्ण ! ब्राह्मणः कश्चित् आगत्य यद्यत् याचति तत्सर्वं ददाति भवान् सर्वदा । भवतः एतं स्वभावं जानन् इन्द्रः ब्राह्मणवेषेण आगत्य कवचं कुण्डलयुगलं च याचति । किन्तु भवता कवचः कुण्डलयुगलं च न दातव्यम् । अन्यत् किमपि अमूल्यं कामं ददातु भवान् । यावत् कवचः कुण्डलयुगलं च भवत्समीपे तिष्ठति तावत् कोऽपि भवन्तं युद्धे जेतुं न अर्हति । तयोः अभावे तु भवतः मरणं सम्भवेत् एव " इति ।

"भगवन् ! भवान् अत्र आगत्य मां जागरितवान् यत् तदर्थम् अहं कृतज्ञः अस्मि । ब्राह्मणः यत् याचति तत् दातव्यम् इति तु मम व्रतम् । तस्मात् एव कारणात् मया कीर्तिः प्राप्ता अस्ति लोके । एवं स्थिते देवेन्द्रः एव कवचं कुण्डलयुगलं च यदा याचति तदा अहं कथं वा न दद्याम् ? अहं तदुभयम् अवश्यं दास्यामि । एतस्मात् मम कीर्तिः वर्धिष्यते । पाण्डवानाम् अपकीर्तिश्च भविष्यति । अपख्यातिप्राप्तिपूर्वकं जीवनेन किं वा प्रयोजनम् ?" इति उक्तवान् कर्णः ।

" मूर्ख ! शरीरविनाशिन्याः कीर्तेः प्राप्त्या किं वा प्रयोजनम् ? । भवतः अर्जुनस्य च युद्धं तु भविष्यति एव । यावत् भवत्समीपे कवचः भविष्यति तावत् इन्द्रसाहाय्येन अपि अर्जुनः भवन्तं जेतुं न अर्हति । अतः इन्द्राय कवचकुण्डलयोः दानं सर्वथा मास्तु." इति उक्तवान् सूर्यः ।

"देव ! क्षन्तव्यः अहम् । ब्राह्मणः



यदा प्रार्थयते तदा अहं प्राणान् अपि दातुं सिद्धः, एवं स्थिते का कथा कवचकुण्डलयोः ? एतेषाम् अभावे अपि अहम् अर्जुनं जेतुं शक्ष्यामि एव । परशुरामेण, द्रोणेन च दत्तानि अस्त्राणि सन्ति मत्सकाशे'' इति उक्तवान् कर्णः।

तदा सूर्यः उक्तवान् - ''मया यत् वक्तव्यम् आसीत् तत् उक्तवान् अस्मि । अन्तिमनिर्णयः तु भवतः एव । कवचस्य कुण्डलयोः च दानं यदि निश्चितम् एव तर्हि इन्द्रं दिव्यशक्तिं वा याचतु । सा च ऐन्द्रशक्तिः प्रबलम् अपि शत्रुं नाशयितुं समर्था । सा शक्तिः अस्ति चेत् भवान् कवचस्य कुण्डलयोः च अभावे अपि अर्जुनं जेतुं शक्नुयात्'' इति ।

अत्रान्तरे कर्णेन जागरणं प्राप्तम् । अन्धकारः अपगच्छन् आसीत् । इन्द्रस्य आगमनं प्रतीक्षमाणः एव कर्णः शय्यातः उत्थितवान् । प्रतिदिनं मध्याह्ने कर्णः सूर्योपासनायाः अनन्तरं ब्राह्मणेभ्यः दानं करोति स्म । तत्समये इन्द्रः ब्राह्मणवेषेण कर्णसमीपम् आगत्य 'भिक्षां देहि' इति याचितवान् ।

कर्णः तम् अपि आदरेण सत्कृत्य- ''ब्राह्मणोत्तम ! किम् अपेक्षते भवान् ? सुन्दर्यः स्त्रियः, फलवती भूमिः, उत श्रेष्ठाः धेनवः ? किं दातव्यं मया ?'' इति पृष्टवान् ।

''वत्स ! तादृशं किमपि न आवश्यकं मम । भवतः कवचं कुण्डलयुगलं च अहम् अपेक्षे'' इति उक्तवान् इन्द्रः।

''ब्राह्मणोत्तम ! कवचः कुण्डलयुगलं च मम शरीरस्य अङ्गभूते । ते मम प्राणायेते । अतः ताभ्याम् ऋते अन्यत् किमपि प्रार्थयतु भवान्'' इति निवेदितवान् कर्णः।

''मम तु कवचः कुण्डले चैव आवश्यके, न अन्यत् किमपि'' इति उक्तवान् इन्द्रः ।

तदा कर्णः हसन् -''भवान् इन्द्रः इति अहं जानामि । भवता मादृशाय वरः दातव्यः, न तु एवं याचना करणीया । यदि अहं भवते कवचं कुण्डलयुगलं च दास्यामि तर्हि शत्रवः मां जेतुं शक्नुयुः, ततः मम अपख्यातिः स्यात् । अतः तस्मात् रक्षणार्थं भवान् मह्यं भवदीयां शक्तिं वा ददातु'' इति उक्तवान् ।

एतत् अङ्गीकुर्वन् इन्द्रः - ''अस्तु नाम । शक्तिं दास्यामि अहम् । किन्तु भवान्

सकृत् एव तस्याः प्रयोगं कुर्यात् । एतत् भवता अनुमन्यते चेत् शक्तिं दास्यामि'' इति उक्तवान् ।

तदा कर्णः उक्तवान् - ''मम शत्रुः एकः एव । सः जितः चेत् अहं कृतकृत्यः भवेयम्'' इति ।

''भवतः सः शत्रुः कः इति अहं जानामि । तया अर्जुनः संहरणीयः इति भवतः अपेक्षा । किन्तु यावत् कृष्णः तस्य सहायकः भवति तावत् भवान् तं जेतुं न शक्नोति । आस्तां तावत् सा कथा । अहं तु शक्तिं दास्यामि । प्राणापायपरिस्थितौ, सर्वाणि अस्त्राणि यदा विफलानि भवन्ति तदा, भवता मदीयशक्तेः उपयोगः करणीयः । अविचिन्त्य सामान्ये अवसरे तस्याः प्रयोगः क्रियते चेत् सा भवतः प्राणान् एव अपहरेत्'' इति सूचितवान् इन्द्रः ।

''शरीराङ्गभूतस्य कवचस्य कुण्डलयोः च पृथक्करणसमये मम वेदना यथा न स्यात् तथा वरं ददातु'' इति प्रार्थितवान् कर्णः । इन्द्रः एतत् अङ्गीकृतवान् । ततः इन्द्रतः शक्तिं प्राप्य कर्णः इन्द्राय स्वस्य कवचं कुण्डलयुगलं च दत्तवान् ।

एषा वार्ता सर्वत्र प्रसृता । एतां वार्तां श्रुत्वा पाण्डवाः सन्तुष्टाः जाताः । कौरवाः च विषादं प्राप्तवन्तः ।

पाण्डवाः यदा द्वैतवने वसन्तः आसन् तदा कश्चन ब्राह्मणः धावन् आगत्य - ''अहं मम अरणिं वृक्षशाखायां स्थापितवान् आसम् । कश्चन सारङ्गः वृक्षं स्वशरीरेण घर्षन् कण्डूतिम् अपनयन् आसीत् । तदा




अरणिः तस्य शृङ्गे लग्नः । अनन्तरं सारङ्गः ततः पलायनम् अकरोत् । अरणिं विना मम अग्निकार्याणि न प्रचलन्ति । अतः कृपया अरणिम् अन्विष्य यच्छन्तु'' इति पाण्डवान् प्रार्थितवान् ।

पाण्डवाः झटिति सारङ्गम् अन्विष्यन्तः ततः गतवन्तः । सारङ्गः तैः दूरात् दृष्टः । सः निरन्तरम् अग्रे धावति स्म । पाण्डवाः अपि तं नैरन्तर्येण अनुसृतवन्तः । किञ्चित्कालानन्तरं सारङ्गः अरण्ये कुत्रापि अदृश्यः जातः ।

नैरन्तर्येण अनुसरणात् पाण्डवाः श्रान्ताः पिपासिताः च आसन् । श्रान्तिपरिहारार्थं ते कस्यचित् वृक्षस्य अधः उपविष्टवन्तः । अस्माकं जीवने कष्टनि किमर्थं आपतन्ति इति विषये तेषां चर्चा आरब्धा । एकैकः



एकैकं कारणम् उक्तवान् ।

एतां चर्चाम् उपसंहर्तुम् इच्छन् धर्मराजः नकुलम् उद्दिश्य – "सर्वेषां पिपासा अस्ति । वृक्षम् आरुह्य अनतिदूरे कुत्र जलम् अस्ति इति दृष्ट्वा तूणीरेण जलम् आनयतु तावत्" इति उक्तवान् ।

नकुलः वृक्षम् आरुह्य दर्शनात् ज्ञातवान् यत् अनतिदूरे एव सरोवरम् अस्ति इति । ततः सः अधः आगत्य सरोवरसमीपं गतवान् । यावत् सः सरोवरजलं स्वीकर्तुम् उद्युक्तः तावता कश्चन ध्वनिः श्रुतः – "अलं जलस्पर्शेन । मम प्रश्नानाम् उत्तरम् उक्त्वा जलं स्प्रष्टुम् अर्हति भवान् । एतत् सरोवरं मम अस्ति" इति ।

नकुलः एतत् वचनम् उपेक्षमाणः जलं पातुम् उद्युक्तः । अतः सः तत्रैव मूर्च्छां गतः । चिरकालानन्तरम् अपि नकुलः न प्रत्यागतः इत्यतः धर्मराजः सहदेवं प्रेषितवान् । सरोवरसमीपम् आगतः सहदेवः मूर्च्छां गतं नकुलं दृष्ट्वा आश्चर्यम् अनुभवन् अशरीरवाणीं श्रुत्वा अपि उपेक्षां प्रदर्शयन् यदा जलं स्पृष्टवान् तदा सः अपि मूर्च्छां गतः ।

अनन्तरं धर्मराजः 'वस्तुस्थितिं ज्ञात्वा आगच्छतु' इति आदिश्य अर्जुनं प्रेषितवान् । अर्जुनः सरोवरतीरे मूर्च्छां गतौ सहोदरौ दृष्टवान् । 'एतस्य कारणीभूतः कः स्यात् ?' इति चिन्तयन् सः परितः दृष्टिं प्रसारितवान् । कोऽपि न दृष्टः तेन । पिपासाबाधाम् असहमानः सः यदा जलं पातुम् उद्युक्तः तदा यथापूर्वम् अशरीरवाणी श्रुता ।

"यदि धैर्यं स्यात् तर्हि सम्मुखम् आगच्छतु तावत् । निलीय स्थित्वा कथनं किमर्थम् ?" इति वदन् अर्जुनः यस्याः दिक्तः अशरीरवाणी श्रुता तस्यां दिशि बाणं प्रयुज्य जलं स्पृष्टवान् । तत्क्षणे एव सः अपि मूर्च्छां गतः । अनन्तरम् आगतः भीमः अपि अशरीरवाणीम् उपेक्षमाणः मूर्च्छां गतः ।

अन्ते धर्मराजः एव सरोवरसमीपम् आगतवान् । मूर्च्छां गतान् सहोदरान् दृष्ट्वा सः नितरां दुःखितः जातः । अत्रान्तरे अशरीरवाणी श्रुता – "अहम् अस्मि बकः । एतस्मिन् सरोवरे स्थितान् मीनान् गृहीत्वा खादन् जीवामि अहम् । मम प्रश्नानाम् उत्तरम् अदत्त्वा एते भवतः सहोदराः जलं पातुम् उद्युक्ताः सन्तः एतां



गतिं प्राप्तवन्तः सन्ति । भवान् वा मम प्रश्नानाम् उत्तरं दत्त्वा जलं पिबतु। मम वचनस्य उपेक्षा कृता चेत् भवतः अपि एतादृशी एव गतिः स्यात्'' इति ।

एतत् श्रुत्वा धर्मराजः - ''सामान्य-बकपक्षितः मरणं प्राप्तुम् अर्हाः न मम सहोदराः । अतः एतत् तु निश्चितं यत् भवान् बकः तु न इति । वस्तुतः कः भवान् ? किम् अपेक्ष्यते भवता ?'' इति पृष्टवान् ।

''आम् । अहं न बकः, अपि तु यक्षराजः अस्मि'' इति वदन् यक्षः तालवृक्षाकारेण सरोवरतीरे दृष्टिगोचरः जातः । ''जलम् आवश्यकं चेत् मम प्रश्नानाम् उत्तरं दातव्यं भवता'' इति उक्तवान् च ।

''पृच्छतु तावत् । यथाशक्ति उत्तरं दास्यामि'' इति उक्तवान् धर्मराजः ।

यक्षः अनेकान् प्रश्नान् पृष्टवान् । धर्मराजः यथायोग्यम् उत्तरं दत्तवान् । एतस्य श्रवणात् यक्षः सन्तुष्टः । ''भवतः उत्तरस्य श्रवणात् सन्तुष्टः अस्मि । अतः एतेषु भवत्सहोदरेषु कञ्चित् उज्जीवयिष्यामि । कः उज्जीवनीयः मया ?'' इति पृष्टवान् यक्षः ।

''यक्षराज ! नकुलम् उज्जीवयतु तावत्'' इति उक्तवान् धर्मराजः ।

''महाबलशालिनि भीमे, अपूर्व-पराक्रमशालिनि अर्जुने च स्थिते अपि भवान् विमातृपुत्रं नकुलम् एव किमर्थम् उज्जीवयितुम् इच्छति ?'' इति पृष्टवान् यक्षः ।

''मम पितुः कुन्ती माद्री चेति उभे पत्न्यौ । कुन्तीपुत्रेषु अहं जीवितः अस्मि । अतः माद्रीपुत्रयोः अपि कश्चन उज्जीवतु इति उद्देशेन अहं नकुलस्य उज्जीवनं प्रार्थितवान्'' इति उक्तवान् धर्मराजः ।

''धर्मद्रोहः न करणीयः इति भवान् चिन्तयति यत् ततः सन्तुष्टः अहं भवतः सहोदरान् सर्वान् अपि उज्जीवयिष्यामि'' इति उक्तवान् यक्षः ।

अनन्तरक्षणे एव भीमार्जुनौ नकुलसहदेवौ चापि निद्रातः इव लीलया उत्थितवन्तः । पिपासाबुभुक्षादयः तान् न बाधन्ते स्म ।

''महात्मन् ! एतस्य सर्वस्य दर्शनात् भासते यत् भवान् सामान्यः यक्षः न इति । वस्तुतः कः भवान् ?'' इति पृष्टवान् धर्मराजः ।

तदा यक्षः उक्तवान् - "भवतः पिता धर्मदेवः एव अस्मि अहम् । भवतः परीक्षार्थम् एव अहम् अत्र आगतः आसम्" इति ।

"आर्य ! कस्यचित् ब्राह्मणस्य अरणिः केनचित् सारङ्गेन नीतः । अरणेः अभावात् सः ब्राह्मणः अग्निकार्यादिकं कर्तुम् असमर्थः जातः अस्ति । तं सारङ्गम् अन्विष्यन्तः अत्र आगताः वयम् । अतः अरणिः ब्राह्मणेन यथा प्राप्येत तथा अनुगृह्णातु कृपया" इति प्रार्थितवान् धर्मराजः ।

"अहम् एव सारङ्गरूपं प्राप्य अरणिम् अपहृतवान् । भवताम् अत्र आनयनार्थम् अहं तथा कृतवान् । एषः स्वीक्रियतां ब्राह्मणस्य अरणिः । कमपि वरम् अपि प्रार्थयतु तावत्" इति उक्तवान् धर्मदेवः ।

"द्वादशवर्षात्मकः अस्माकं वनवासः समाप्तप्रायः अस्ति । अज्ञातवासकाले अस्मान् कोऽपि अभिज्ञातुं यथा न शक्नुयात् तथा वरेण अनुगृह्णातु" इति प्रार्थितवान् धर्मराजः ।

"तथास्तु" इति उक्त्वा ततः अदृश्यः अभवत् धर्मदेवः । पाण्डवाः द्वैतवनं प्रत्यागत्य ब्राह्मणाय अरणिं दत्तवन्तः । अरणिप्राप्तितः सन्तुष्टः ब्राह्मणः पाण्डवान् आशीर्वादेन अनुगृह्य स्वस्थानं प्रतिगतवान् । ततः अचिरात् एव पाण्डवानां वनवासावधिः समाप्तः । पाण्डवाः आत्मना सह वसतः ब्राह्मणान् उद्दिश्य - "ब्राह्मणोत्तमाः ! इतः परम् अज्ञातवासः करणीयः अस्ति अस्माभिः । अतः आप्रच्छनम् इच्छामः वयम्" इति वदन्तः ब्राह्मणान् प्रेषयन्तः - "अज्ञातवासः निर्विघ्नतया समाप्तः भवतु" इति आशीर्वादं प्राप्तवन्तः ।

तदा धौम्यः पाण्डवान् उद्दिश्य - "अचिरात् एव भवतां कष्टानि अपगतानि भविष्यन्ति" इति उक्तवान् ।

पाण्डवाः द्रौपद्या धौम्येन च सह आश्रमतः प्रस्थाय एकस्मिन् विजने स्थले वासं कृतवन्तः ।

'श्वः आरम्भणीयस्य अज्ञातवासस्य स्वरूपं कथं स्यात् ?' इति विषये ते रहसि दीर्घचर्चां कृतवन्तः ।

- (अनुवर्तते)



# रसवार्ताः

### स्वागतस्य सन्नाहः

२,००० तमवर्षस्य डिसेम्बर्मासस्य ३१तमे दिनाङ्के २०तमं शतकं समाप्तिम् एष्यति । अस्य शतकस्य अन्तिमसहस्रदिनानां 'परिगणनं' (Countdown) गते एप्रिल्मासे प्यारिस्नगरे पिल्टवर्मध्ये आरब्धम् । २१ तमशतकस्य वैभवोपेतं स्वागतं कर्तुं विश्वे सर्वत्र बहुषु नगरेषु गणनीयप्रमाणेन सज्जताः आरब्धाः सन्ति ।

२,०००तमवर्षस्य जनवरी-प्रथमदिनाङ्कतः एव एषः उत्सवः आरप्स्यते । २१ तमशतकस्य स्वागतं कर्तुं प्रथमः अवकाशः न्यूझिलेण्ड्देशस्य ओकल्याण्ड्-नगरेण प्राप्तः अस्ति ।

### अत्युन्नतं शिखरम्

टायवान्देशस्य राजधान्यां टायपिनगरे अग्रिमवर्षद्वये एकस्य इष्टिकायाः शिखरस्य निर्माणकार्यं समाप्यते । निर्माणस्य अनन्तरं गिन्निस्पुस्तके तस्य उल्लेखः अपि भविष्यति । अस्य शिखरस्य औन्नत्यं ५५० मीटर् । इदानीं केनडादेशस्य टारेण्टानगरे विद्यमानस्य सि.एस्. शिखरस्य यावत् औन्नत्यम् अस्ति ततोऽपि १० मीटर् परिमितम् औन्नत्यम् अधिकम् अस्ति एतस्य शिखरस्य । ७३,०००,००० अमेरिकन् डालर्धनस्य व्ययेन निर्मास्यमाणस्य अस्य शिखरस्य पुरतः ते शिखरे वामने दृश्येते, ये च टोक्योनगरे (३३३ मी.) फिल्प्रदेशे (३३० मी.) च स्तः ।

### अखण्डं पारायणम्

अस्मिन् वर्षे एप्रिल्मासस्य १६ दिनाङ्के रामनवमी-उत्सवः प्रवृत्तः । ततः पञ्चदिनेभ्यः पूर्वं केचन भक्ताः सरयूनदीतीरे एकं महायज्ञम् आरब्धवन्तः सन्ति । एषः महायज्ञः आगामि-रामनवमीपर्यन्तं, तन्नाम १९९८तमवर्षस्य एप्रिल्मासस्य २० तमदिनाङ्कपर्यन्तं, प्रचलिष्यति । अस्मिन् अवधौ निरन्तरं सीतारामनाम-पारायणं करिष्यते । एतत् पारायणं कर्तुं २१,००० वैदिकपण्डिताः नियुक्ताः सन्ति ।

### ग्रन्थसाहेब्-फ्रेञ्च्-अनुवादः

सिक्खमतस्य धर्मग्रन्थस्य 'ग्रन्थसाहेब' नामकस्य अनुवादः फ्रेञ्च्भाषया कृतः अस्ति । १६ पृष्ठात्मकेन अनुबन्धेन युक्तः एषः एकः १६७६ पृष्ठात्मकः महाग्रन्थः । केनडासर्वकारे अधिकारी सन् प्रकृतं निवृत्तः डा।। जर्नायल् सिङ्गवर्यः एतं ग्रन्थम् अनूदितवान् अस्ति । एतस्य ग्रन्थस्य अनुवादार्थं १२ वर्षाणि आवश्यकानि अभवन् । विदेशं गत्वा उषितवत्सु सिक्खजनेषु अधिकाः केनडादेशे एव सन्ति । तत्र शासनभाषात्वेन आंग्लं फ्रेञ्च् च अस्ति । फ्रान्स्देशं विहाय अन्येषु ४० देशेषु फ्रेञ्च्भाषिणः जनाः सन्ति । अस्माकं देशे अपि पाण्डिचेरि, कारैकाल्, माहे, यानाम् इत्यादिषु प्रदेशेषु इदानीमपि फ्रेञ्च्भाषिणः जनाः सन्ति ।

### लघुशिशवः किमर्थं रुदन्ति ?

क्षीरम् अपेक्षितमिति, माता आवश्यकी इति, आहोस्वित् सुखनिद्रा अपेक्षिता इति वा लघुशिशवः रुदन्ति । एतं विषयं तु सर्वाः मातरः जानन्ति एव । किन्तु रोदनं किन्निमित्तम् इति तु ऊहया एव ज्ञातव्यम् । अमेरिकादेशस्य वागभिज्ञान-भाषाधिगमनसंशोधनाकेन्द्रे (Speech Recognition and Language understanding Services Laboratory), केनडादेशस्य ब्रिटिष्-कोलम्बिया-विश्वविद्यालये च शिक्षणतज्ज्ञाः केचन अस्मिन् विषये संशोधनं कुर्वन्तः सन्ति । बालानां वैविध्यमयानि रोदनानि परिशील्य ध्वनिमुद्रणं कुर्वन्तः सन्ति । तस्मिन् विषये विमर्शनमपि प्रचलत् अस्ति । बालानां रोदनम् अवगत्य तस्य आवश्यकता का इति निर्दुष्टं ज्ञातुं शक्यते इति ते वदन्ति ।

चन्दमामायाः
अनुबन्धः -
१०४



अस्माकं देशस्य
सौन्दर्यस्थानानि

# कोणार्कस्थः सूर्यदेवालयः

ओरिस्साराज्यस्य सुप्रसिद्धः कोणार्कदेवालयः १३ शतके निर्मितः । अयं अद्वितीयः सूर्यदेवालयः । अस्माकं देशे विद्यमानेषु उन्नतेषु देवालयेषु कोणार्कदेवालयोऽपि अन्यतमः । एतस्य प्रवेशद्वारे स्थितानि सोपानानि उभयतः अश्वानां शिल्पानि निर्मितानि सन्ति । अयं देवालयः रथस्य आकारेण निर्मितः अस्ति । सूर्यनारायणः सप्ताश्वान् संयोज्य रथेन आकाशमार्गेण सञ्चरति इति अस्माकं पुराणानि वदन्ति ।







गङ्गवंशस्य राजा नरसिंगदेवराजः एतं देवालयं निर्मापितवान् । १२०० शिल्पिनः १६ वर्षाणि यावत् निरन्तरं कार्यं कृत्वा एतं देवालयं निर्मितवन्तः इति श्रूयते । अस्य निर्माणार्थं ४० कोटिरूप्यकाणि व्ययितानि सन्ति ।

कोणार्कदेवालयस्य शिल्पानि अद्यापि द्रष्टॄणां हृदयानि अपहरन्ति । रमणीयैः ओडिस्सिनाट्यभङ्गिभिः, कलाविदां पदविन्यासैः च युक्तानि सूर्यदेवालये विद्यमानानि शिल्पानि सहृदयानां प्रेक्षकाणां नेत्रयोः पुरतः अद्यापि नृत्यन्ति ।

पुराणकालस्य नृपाः -

# जानुश्रुतिः रैक्वश्च

जनश्रुतेः पुत्रः जानुश्रुतिः धर्मेण राज्यपालने निरतः आसीत् । सः प्रतिदिनं प्रजानां सुखदुःखम् अधिकारिभिः चारैः च जानाति स्म । प्रजानां क्लेशान् परिहृत्य, ताः सर्वाः सुखेन सन्ति इति निश्चित्य एव सः निद्रां करोति स्म । तादृशः महापुरुषः आसीत् सः ।

एकदा पूर्णिमायाः रात्रौ जानुश्रुतिः प्रासादस्य उपरि एव अटन् आसीत् । तदा सः आकाशे डयमानान् कांश्चन राजहंसान् दृष्टवान् । प्रासादस्य उपरि गमनसमये ते परस्परं किमपि सम्भाषमाणाः आसन् । तत् राजा श्रुतवान् । सः पक्षिणां भाषामपि जानाति स्म ।

एकः राजहंसः उक्तवान् - "अस्य प्रासादस्य ,उपरि काचित् विशिष्टा कान्तिः दृश्यते खलु?" इति ।

"आम् । भवता दृश्यमाना कान्तिः जानुश्रुतेः तेजः । सः सत्यवाक्यः, धर्मपरिपालकश्च । अतः एव तं परितः तादृशं तेजोमण्डलं विद्यते । किन्तु सः तत् द्रष्टुं न शक्नोति" इति उक्तवान् द्वितीयः राजहंसः ।

"जानुश्रुतिः धर्मप्रभुः इत्यत्र सन्देहः एव नास्ति । किन्तु पूर्वम् एकस्मिन् दिने रात्रौ रैक्वमहाराजस्य प्रासादस्य उपरि गमनसमये इतोऽपि अधिका प्रकाशमाना कान्तिः मया दृष्टा" इति उक्तवान् तृतीयः हंसः ।

पश्चात् ते हंसाः मेघानां मध्ये कुत्रापि गतवन्तः । जानुश्रुतिः हंसानां वचनं श्रुत्वा बहु सन्तुष्टः । न्याय्येन मार्गेण धर्मानुगुणं प्रजापालनं कुर्वन् अन्यः राजाऽपि अस्यां भूमौ अस्ति इति ज्ञातवतः तस्य अत्यधिकः आनन्दः अभवत् । तस्यां रात्रौ सः सुखेन निद्रां कृतवान् । अनन्तरदिने प्रभाते एव सः मन्त्रिणः, दूतान् च आहूय तेषां द्वारा रैक्वराजस्य विषये इतोऽपि अधिकं विचारं सङ्गृहीतवान् । पश्चात् स्वयं गत्वा रैक्वेण मिलितवान्, तेन सह सम्भाषितवान् च । युवकं रैक्वं धर्मनिरतं दृष्ट्वा तुष्टः सन् सः स्वपुत्रीं तस्मै दत्तवान्, स्वस्य राज्यमपि तस्मै समर्पितवान् ।



# अपूर्वः विनोदकार्यक्रमः




सङ्गीतनाटकयोः सङ्गमेन सिद्धं विशिष्टं गीतरूपकम् ''अपेरा'' नाम । अस्मिन् गीतरूपके गायकाः एव अभिनयन्ति । तेषां पृष्ठतः एव वाद्यवृन्दं भवति । अपूर्वैः अलङ्कारैः युक्ताः जवनिकाः, वेषधारिणां वर्णालङ्कारः, वर्णमयवस्त्राणि च आडम्बरयुक्तानि भवन्ति । एषः गीतरूपककार्यक्रमः १६ शतके आरब्धः। ग्रीकाः रोमनाः च स्वपुराणेभ्यः एतदर्थं वस्तु चिन्वन्ति स्म । बहुकालपर्यन्तम् ''अपेरा'' केवलं धनिकानां विनोदकार्यक्रमः सन् एव अनुवर्तमानः आसीत् । १८शतकस्य मध्यभागे यूरोपखण्डस्य सर्वेषु नगरेषु, महानगरेषु च एतस्य गीतरूपकस्य प्रदर्शनार्थं रङ्गमन्दिराणि आरब्धानि । क्रमेण गीतरूपकेण सह तस्यां वेदिकायाम् एव सुश्राव्याः पारम्परिकसङ्गीतकार्यक्रमाः अपि आरब्धाः।



# कमलमन्दिरम्




अस्माकं राजधान्यां देहल्याम् इदं मन्दिरं प्रधानम् आकर्षणकेन्द्रं जातम् अस्ति । ८००० कर्मकराः सार्धषड्वर्षाणि यावत् एतस्य निर्माणाय परिश्रमं कृतवन्तः सन्ति । एतस्य निर्माणाय १२० लक्ष्यं अमेरिकन्डालर्मितः व्ययः कृतः अस्ति । एतत् कमलाकारकं मन्दिरं 'बहाय्' इति नाम्ना अपि निर्दिश्यते । अस्य मन्दिरस्य बहिर्भागे त्रीणि कमलदल-युगलानि सन्ति । अन्तर्भागे च नवदलानि सन्ति । एतत् मन्दिरम् प्रकाशमानेन स्वच्छेन श्वेतवर्णेन युक्तम् अस्ति । एतस्य मन्दिरस्य निर्माणार्थम् अपेक्षितं विशिष्टं वज्रचूर्णं कोरियादेशात् आनायितम् आसीत् ।



# अदृष्ट-दुरदृष्टौ

*(गतसञ्चिकातः अनुवृत्ता)*

स्वस्य निर्णयानुगुणं राजा दरिद्रं राक्षसद्वीपं प्रति नेतुम् एकां लघुनौकां, चतुरः भटान् च सज्जीकृतवान् ।

'अहं दरिद्रं पीडयन् अस्मि' इति जानन् अपि राजा किञ्चिदपि खिन्नः न जातः आसीत् । सः चिन्तयति स्म यत् मया दरिद्रः यथायोग्यं दण्ड्यमानः अस्ति इति । 'जीवनं मरणं वा, उत्थानं पतनं वा दैवनिर्णयानुगुणम् एव भविष्यति' इति भावयति स्म दरिद्रः । मानवः निमित्तमात्रम् इति चिन्तयति स्म सः । किन्तु राज्ञः विचारः एतस्मात् सर्वथा भिन्नः । 'स्वस्य उन्नत्यवनत्योः कारणं मानवः स्वयम् एव' इति तस्य चिन्तनम् । जीवननिर्वहणार्थं भगवतः कृपायाः याचनं न सहते स्म सः ।

अतः एव प्रस्थानात् पूर्वं राजा दरिद्रम् उद्दिश्य - ''षण्मासानन्तरम् एतस्याम् एव तिथौ एतां नौकाम्, एतान् भटान् च प्रेषयिष्यामि । यदि भवति प्राणाः भविष्यन्ति तर्हि तस्यां तिथौ भवान् द्वीपस्य तीरम् आगत्य तिष्ठतु । एते घण्टात्रयं यावत् भवतः निरीक्षां करिष्यन्ति'' इति उक्तवान् आसीत् । दरिद्रः अङ्गीकारपूर्वकं शिरः चालयन् मनसि एव देवस्य ध्यानं कुर्वन् नौकायाम् उपविष्टवान् ।

नौकायां उपविष्टवतः तस्य मनःस्थितिः विचित्रा आसीत् । 'राक्षसद्वीपं गताः सर्वे मरणं प्राप्नुवन्ति एव इत्यतः ममापि मरणं सम्भवेत् एव' इति मनसि एकवारं भासते स्म । पुनः मनसि विचारः भवति स्म - 'यदि देवः मां रक्षितुम् इच्छति तर्हि अवश्यं कमपि मार्गं कल्पयिष्यति एव' इति । अतः देवे दृढविश्वासं कुर्वन् सः मौनेन उपविष्टवान् आसीत् ।

नाविकः वेगेन नौकां चालयन् शीघ्रमेव

राक्षसद्वीपं नीतवान् । द्वीपप्राप्तेः अनुक्षणं भटाः रज्जुनिश्रेणीं प्रसार्य दरिद्रं बहिः प्रेषितवन्तः । दरिद्रस्य गमनानुक्षणं ते आहारवस्तूनां स्यूतान् अन्यवस्तूनि च भूमौ क्षिप्तवन्तः । ततः वेगेन नौकां प्रवाहे नयन्तः अल्पे एव काले अदृश्याः जाताः । परितः अनन्तः समुद्रः । मध्ये भूमिः । तस्यां भूमौ दरिद्रः एकाकी !!

एकान्तम् असहमानः सः दरिद्रः अत्यन्तं दुःखितः जातः । तत्रैव महता दुःखेन रुदन् सः - ''देव ! भवान् कीदृशं दुरदृष्टजीवनं लिखितवान् मम ललाटे ? भययुक्तात् एतस्मात् एकान्तजीवनात् मरणम् एव वरम् । मम जीवम् अपनयतु । राक्षसस्य पादशब्दः यदा श्रूयते तदा मम हृदयस्तम्भनं करोतु । उत्तममरणेन वा माम् अनुगृह्णातु'' इति प्रार्थितवान् ।

भयोद्वेगकारणतः तेन बुभुक्षा अपि न ज्ञाता । 'आसन्नमरणस्य मम आहारादिकं वा किमर्थम् ?' इति चिन्तयन् सः आहारवस्तूनां स्यूतान् कटाक्षेण अपि न दृष्टवान् । बहुसमयपर्यन्तं रुदन् तत्रैव शयितवान् । अचिरात् एव तेन निद्रा प्राप्ता । यदा तस्य जागरणं जातं तदा सर्वत्र सूर्यरश्मयः प्रसृताः आसन् । 'एतावता अपि मम प्राणाः न गताः' इति सन्तुष्टः सः । 'राक्षसाः गन्धम् आघ्राय एव मानवानाम् उपस्थितिं ज्ञातुं शक्नुवन्ति इति श्रूयते । आगतवतः मम तु बहु समयः अतीतः । तथापि किमर्थं राक्षसः न आगतः ?' इति चिन्तयन् दरिद्रः आश्चर्यचकितः जातः ।

समुद्रतीरे एव तिष्ठन् कण्डोले विद्यमानं



फलखाद्यादिकं खादन् रात्रौ तत्रैव निद्रितवान् सः । तृतीयदिने अपि तस्य कोऽपि अपायः न जातः । एतेन तस्य उत्साहः, धैर्यं च उत्पन्नम् । सः विचित्रधैर्येण उत्साहेन च द्वीपाभिमुखं प्रस्थितवान् । सायङ्कालपर्यन्तं सर्वत्र अटितवान् । राक्षसस्य चिह्नं तेन कुत्रापि न दृष्टम् । रात्रौ अनतिदूरे एव स्थितस्य फलभरितवृक्षस्य अधः भयेन एव शयानः सः निद्रितवान् ।

चतुर्थदिने प्रातः उत्थाय सः पुनः गमनम् अनुवर्तितवान् । मध्याह्नसमये द्वीपस्य मध्यभागं प्राप्तवान् सः । तत्रत्यं दृश्यं दृष्ट्वा क्षणकालं दिग्भ्रान्तः सः ।

विशाले समतलप्रदेशे एकम् उन्नतम् अस्थिपञ्जरं पतितम् आसीत् । तस्य आकारादिकम् अवलोकितवान् दरिद्रः -



'एतत् विचित्रस्य राक्षसस्य अस्थिपञ्जरम् एव' इति चिन्तयन् महता आनन्देन भगवन्तं नमस्कृतवान् ।

'विचित्रः राक्षसः मृतः इति कारणतः द्वीपे कोऽपि क्लेशः नास्ति' इति ज्ञातवतः दरिद्रस्य महान् सन्तोषः जातः । सः उत्साहेन फलादिकं खादन् अग्रे गन्तुम् उद्युक्तः अभवत् ।

पञ्चमे दिने मध्याह्ने अन्यः कश्चन आश्चर्यजनकविषयः तेन ज्ञातः । कस्यचित् महतः वृक्षस्य अधः भूमौ अपरिमितं वज्रवैढूर्यादिकं, उत्तमजातीयानि रत्नानि, मौक्तिकानि, सुवर्णाभरणानि च प्रभूततया दृष्टानि तेन ।

सुमहत् ऐश्वर्यं दृष्ट्वा दरिद्रः आश्चर्यचकितः जातः । 'एतानि सर्वाणि तेन राक्षसेन गृहीतानां वणिजां नाविकानां च वस्तूनि स्युः' इति चिन्तयतः तस्य हृदयं करुणापूर्णं जातम् । बहुसमयपर्यन्तं चिन्तयन् आसीत् सः दरिद्रः । अनन्तरम् उत्थाय सः द्वीपस्य तीरं गत्वा आहारस्यूतद्वयं रिक्तीकृत्य तस्मिन् सुवर्ण-रत्नादीन् पूरितवान् । एतत्कार्यकरणसमये तत्रत्ये गुल्मे स्थितानां कण्टकादीनां कारणतः तस्य हस्तयोः व्रणाः सञ्जाताः । तथापि तान् अपरिगणयन् सः कार्यं समाप्य तीरं प्रति प्रस्थितः । तदा तत्रैव कश्चित् चर्मस्यूतः तेन दृष्टः ।

अनुक्षणं तत् सम्पद्भरितस्यूतद्वयं पार्श्वे संस्थाप्य तस्मिन् चर्मस्यूते किम् अस्ति इति द्रष्टुम् उद्युक्तः जातः सः दरिद्रः । तस्मिन् प्रभायुक्तः कश्चन मणिः तेन दृष्टः । यदा सः तं मणिं परीक्षमाणः आसीत् तदा मणेः संस्पर्शकारणतः तस्य हस्ते विद्यमानाः व्रणाः सर्वे अदृश्यतां गताः । चर्म पूर्ववत् स्वाभाविककान्तियुक्तं जातम् । एतेन विचित्रपरिवर्तनेन आश्चर्यचकितः सः तं मणिम् अन्यत्र अपि स्पर्शयन् परीक्षितवान् । अन्यत्र विद्यमानाः व्रणाः अपि अदृश्यतां गताः ।

दरिद्रः महता सन्तोषेण भगवन्तं कृतज्ञतया स्मरन् तं मणिं पुनः चर्मस्यूते एव संस्थाप्य,तैन सह स्यूतद्वयं गृहित्वा समुद्रतीरम् आगतवान् ।

दिनचतुष्टयम् अतीतम् । ततः एकस्मिन् दिने तीरे अटनसमये काचित् वाणिज्यनौका तेन दृष्टा । अनुक्षणं सः तीरे धावन् उच्चैः आह्वयन् स्ववस्त्रं वायौ चालयन् तेषां दृष्टिम्

आक्रष्टुं प्रयत्नं कृतवान् । किञ्चित्समयाभ्यन्तरे नाविकः नौकां तीरं प्रति आनीतवान् । दरिद्रः स्वस्य वस्तूनि स्वीकृत्य नौकारोहणं कृतवान् । नौकाप्रयाणम् आरब्धम् ।

नौकायां बहवः जनाः दरिद्रं परितः तिष्ठन्तः - "भोः ! कः भवान् ? सर्वे राक्षसद्वीपं स्मर्तुम् अपि भयम् अनुभवन्ति । एवं स्थिते भवान् कथम् अत्र एकाकी वासं कृतवान् ?" इत्यादिरूपेण प्रश्नवृष्टिम् एव पातितवन्तः ।

दरिद्रः एकवारं दीर्घं निःश्वस्य पूर्वनिर्णयानुगुणम् एवम् उक्तवान् -

"बान्धवाः ! मम नाम शिवानन्दः । मम जन्मभूमिः कुम्भीनसदेशः । अहं कश्चित् सामान्यः वणिक् । समुद्रवाणिज्यं करणीयं, लक्षाधिकरूप्यकाणां सम्पादनं करणीयं च इति मम महती इच्छा बहुकालतः आसीत् । परन्तु 'समुद्रवाणिज्यं बहु कष्टकरम् । कदाचित् लाभः, पुनः कदाचित् मूलधनस्य अपि नाशः भविष्यति । अतः तत् मास्तु' इति उपदिशन्तः मम स्नेहिताः विरोधं कृतवन्तः । परन्तु मम इच्छा तु दिने दिने प्रवर्धमाना आसीत् । एकदा अहं महाधनिकं मम बाल्यमित्रम् उद्दिश्य - 'अन्ये यद्यपि बहुधा कथयन्ति, तथापि मम समुद्रवाणिज्यस्य इच्छा तु दृढा जाता अस्ति । परन्तु प्रभूतं मूलधनं मम समीपे नास्ति । ऋणं यदि स्वीकरोमि तर्हि प्रतिदातुं शक्यते उत न इति भयं बाधते माम् । यःकोऽपि मह्यं यदि तावत् धनं दद्यात् तर्हि राक्षसद्वीपे एकसप्ताहं यापयितुम् अपि



सिद्धः अस्मि' इति उक्तवान् ।

एतादृशीषु स्पर्धासु तस्य मित्रस्य महती प्रीतिः । एतं विषयं ज्ञात्वा एव अहं तथा उक्तवान् आसम् । अनुक्षणं सः कांश्चन नियमान् उक्त्वा मां द्वीपं प्रापितवान् । तस्य नियमानाम् अनुगुणं राक्षसद्वीपतः बहिः आगमनव्यवस्था मया एव करणीया आसीत् । अत्र आगतवतः मम दश दिनानि अतीतानि । दशदिनेभ्यः प्राणान् हस्ते गृहीत्वा कस्याश्चित् नौकायाः आगमनं प्रार्थयन् आसम् । अद्य मम प्रार्थना सफला जाता" इति उक्तवान् ।

परितः विद्यमानाः सर्वे तस्य वचनं श्रुत्वा आश्चर्येण - "दश दिनानि राक्षसद्वीपे यापयित्वा प्राणसहितं बहिः आगतवान् यत् तस्मिन् विश्वासकरणं कष्टसाध्यम् ।



वस्तुतः द्वीपे राक्षसः अस्ति किम् ?'' इति पृष्टवन्तः ।

''अहं न जाने । तीरस्य अन्तः मया न गतम् एव । अन्तः कोऽपि शब्दः मया न श्रुतः'' इति उत्तरितवान् शिवानन्दरूपेण परिवर्तितः दरिद्रः ।

''एवं तर्हि राक्षसः तं द्वीपं परित्यज्य अन्यत्र गतवान् स्यात् । अथवा दिवं गतः वा स्यात् । एवं ननु ?'' इति पृष्टवान् अन्यः कश्चित् ।

''एतद्विषये अहं किं वा वदेयम् ? द्वीपं गतवन्तं मां प्राणापायभीतिः सर्वदा बाधते स्म । अतः तीरात् एकं पदम् अपि अहम् न गतवान् । सर्वदा काऽपि नौका आगच्छेत् वा इत्येव प्रतीक्षमाणः भवामि स्म । अत्रान्तरे एषा नौका आगता । अहं कथमपि रक्षितः अभवम् । इतोऽप्यधिकं किमपि न जानामि अहम्'' इति उक्तवान् दरिद्रः ।

तदनन्तरं नौकायां बहुसमयपर्यन्तं सर्वे राक्षसद्वीपस्य विषये, राक्षसः मृतः उत न इति विषये च चर्चां कुर्वन्तः आसन् ।

दरिद्रः क्रमेण वार्तालापविषयस्य परिवर्तनं कुर्वन् नौकासम्बद्धानि प्रयाणविवरणानि, नौकायां स्थितानां वणिजां विषये विवरणानि च सङ्गृहीतवान् ।

सा नौका दरिद्रस्य देशस्य पार्श्वे स्थितस्य मातङ्गदेशस्य वाणिज्यनौका आसीत् । भिन्नभिन्नवणिग्भिः युक्तया तया नौकया मार्गस्थेषु द्वित्रेषु द्वीपेषु कानिचन दिनानि स्थित्वा पुनः सिंहाद्रिदेशपर्यन्तं गन्तव्यम् आसीत् । नौकायां स्थितेषु वणिक्षु ज्येष्ठः मणिकुण्डलः शान्तस्वभाववान् उत्तमः च आसीत् । तं दरिद्रः बहु इष्टवान् । अतः सः सर्वदा तेन सह तिष्ठन् वाणिज्यरहस्यानि सर्वाणि ज्ञातुं प्रयत्नं कृतवान् ।

कानिचन दिनानि अतीतानि । नौका नारिकेलद्वीपं प्राप्तवती ।

''शिवानन्द ! अत्र नारिकेलं, शुष्कनारिकेलं, रज्जुनिर्मितानि वस्तूनि च न्यूनमूल्येन लभ्यन्ते । अग्रे लभ्यमानेषु द्वीपेषु सिंहलदेशे चापि तेषां वस्तूनाम् अपेक्षा अधिका अस्ति'' इति तम् उक्तवान् मणिकुण्डलः ।

अनुक्षणं दरिद्रः अपि तेन सह द्वीपं गत्वा वस्तूनि क्रीत्वा रक्षितवान् ।

विरामसमये सम्भाषणं कुर्वन्तौ दरिद्रः मणिकुण्डलः च द्वीपे अटन्तौ आस्ताम् ।

तदा शिलाखण्डस्य घट्टनेन मणिकुण्डलस्य पादे व्रणः जातः । व्रणजनितया वेदनया रात्रौ निद्राम् अपि न प्राप्तवान् मणिकुण्डलः । शय्यायाम् इतस्ततः लुठति स्म सः । मध्यरात्रे कश्चित् तस्य समीपम् आगतवान् । एतत् ज्ञात्वा झटिति उत्थाय दीपं गृहीत्वा दृष्टवान् मणिकुण्डलः । शिवानन्दः आगतः आसीत् तत्र ।

तं दृष्ट्वा - "शिवानन्द ! एतस्मिन् अकाले किमर्थम् आगतं भवता ?" इति आश्चर्येण पृष्टवान् मणिकुण्डलः ।

तदा दरिद्रः - "भवतः वेदनां दृष्ट्वा नितरां खिन्नः अहं भवतः साहाय्यार्थम् अत्र आगतवान् । क्षणं तिष्ठतु" इति उक्त्वा वस्त्रमध्यस्थं मणिं स्वीकृत्य क्षतस्थले स्थापितवान् ।

अनुक्षणं मणिकुण्डलस्य वेदनाः सर्वाः अपगताः । सः आश्चर्येण - "शिवानन्द ! किम् एतत् ? भवान् वस्तुतः वणिक् अस्ति किम् ?" इति पृष्टवान् ।

दरिद्रः क्षणकालस्य मौनस्य अनन्तरं - "एषः प्रश्नः कदाचित् श्रोतव्यः भविष्यति एव इति कारणतः एतत् कार्यम् अद्यपर्यन्तम् अहं न कृतवान् आसम् । परन्तु भवतः वेदनां द्रष्टुम् अशक्तः अहम् इदानीम् अपायपरिस्थितौ पतितः अस्मि" इति उक्त्वा मणिकुण्डलस्य हस्तं गृह्णन् - "स्वामिन् ! भवान् वयसा, अनुभवेन, उत्तमतया च मम अपेक्षया ज्येष्ठः अस्ति । अहम् इदानीं वणिक् इति तु शतप्रतिशतं सत्यम् । मम गतजीवनविषये कृपया किमपि मा पृच्छतु । मम प्रकृतपरिस्थितेः कारणीभूतां व्यक्तिं सर्वम् उक्त्वा एव अन्ये वक्तव्याः इति मम इच्छा । किन्तु एकं तु निश्चितं यत् पूर्वम्, इदानीम्, इतःपरं सर्वदा चापि भगवति एव पूर्णविश्वासः मम । मनुजस्य ललाटे भगवता यत् लिखितं तत् एव भविष्यति इति मम दृढः विश्वासः । मम अद्यतनपरिस्थितेः कारणम् अपि एषः विश्वासः एव । मम वाणिज्यजीवनस्य प्रथमगुरुः भवान् एव । आशीर्वादं करोतु कृपया" इति उक्त्वा नमस्कृतवान् ।

मणिकुण्डलः आश्चर्येण सर्वं श्रुत्वा तस्य शिरसः उपरि हस्तं स्थापयित्वा आशीर्वादं कृतवान् ।

*(अग्रिमसञ्चिकायां समाप्तिः)*






# धनानुगुणं चिकित्सा

कस्मिंश्चित् ग्रामे चिन्मयः नाम कश्चित् धनिकः आसीत् । तं ग्रामं परितः कोऽपि तादृशः धनीकः न आसीत् । परन्तु सः महाकृपणः आसीत् ।

कृपणः चिन्मयः कदाचित् नेत्रवेदनया बाधितः अभवत् । तस्य नेत्राभ्यां निरन्तरं जलं प्रवहति स्म । अत्यधिकं तापः, शिरोवेदना, पादकम्पनम् इत्यादयः अपि आरब्धाः । तेनैव सह दृष्टिमन्दता अपि आरब्धा । पार्श्वग्रामे कश्चित् प्रसिद्धः वैद्यः आसीत् । तेन दीयमानानि औषधानि रामबाणसदृशानि भवन्ति स्म । तादृशः अन्यः वैद्यः तस्मिन् प्रदेशे एव कोऽपि न आसीत् ।

तस्य वैद्यस्य कश्चित् विशिष्टः स्वभावः आसीत् । सः रोगिणः परिस्थितिम् अवलोक्य तदनुगुणम् औषधं ददाति स्म । तदनुगुणम् एव धनं स्वीकरोति स्म च । रोगिणः दरिद्राः चेत् तेभ्यः योग्यम् औषधं दत्त्वा ते यावत् धनं ददति तावदेव स्वीकरोति स्म । रोगिणः धनिकाः चेत् तेभ्यः अधिकधनं प्राप्नोति स्म ।

वैद्यस्य एतादृशं स्वभावं ज्ञात्वा एव तस्य विषये कुपितः आसीत् कृपणः चिन्मयः । पूर्वं कदाचित् तस्मात् वैद्यात् एव चिकित्सां प्राप्य अनन्यगतिकतया शतं रूप्यकाणि दत्तवान् आसीत् सः ।

इदानीं चिन्मयेन स्वस्य रोगार्थं तस्य एव वैद्यस्य चिकित्सा प्राप्तव्या आसीत् । यतः तादृशः वैद्यः समीपप्रदेशे कोऽपि अन्यः न आसीत् । परन्तु 'यदि तस्य समीपं गच्छामि तर्हि अधिकं धनं दातव्यम् एव भविष्यति' इति भीतिः अपि आसीत् चिन्मयस्य मनसि ।

अतः चिन्मयः -'दरिद्रः इति अभिनयता मया तस्य वैद्यस्य समीपं गन्तव्यम्' इति

*'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'*

चिन्तितवान् । सः एकां छिन्नां वेष्टीं धृत्वा शिरसि अन्यत् एकं छिन्नं वस्त्रं धृत्वा ताम्बूलसहितं नाणकद्वयं स्वीकृत्य खञ्जः इव अभिनयन् वैद्यगृहं गतवान् । वेषानुगुणं दैन्येन सम्भाषणं कुर्वन् नेत्रवेदनाविषयं विस्तरेण निवेद्य -''औषधं ददातु'' इति प्रार्थितवान् च ।

''भवतः रोगशमनम् अहं करिष्यामि । भयं मास्तु । अहं यथा वदामि तथा करोतु । चत्वारि मूलकानि स्वीकृत्य लघुखण्डशः कर्तयित्वा लवणे निमज्य ततः प्राप्ते जले हिङ्गुं योजयित्वा पिबतु । अनन्तरं मूलकखण्डान् शुष्कीकृत्य रात्रौ खादतु । एवम् अष्टचत्वारिंशत् दिनानि प्रतिदिनं करोतु । ततः भवान् निश्चयेन रोगमुक्तः भविष्यति'' इति उक्तवान् वैद्यः ।

चिन्मयः गृहम् आगत्य वैद्यस्य निर्देशानुसारं चत्वारिंशत् दिनानि यावत् औषधं स्वीकृतवान् । परन्तु सा चिकित्सा तस्य मनसि जुगुप्साभावम् अजनयत् । हिङ्गुमूलकानां गन्धेन युक्तस्य लवणजलस्य पानं, शुष्कमूलकानां खादनं च चिन्मयाय लेशमात्रेण अपि न रोचते स्म । यतः प्रतिदिनम् उत्तमान् आहारपदार्थान् एव खलु सेवते स्म सः? । चिन्मयः चत्वारिंशत् दिनानि महता कष्टेन औषध-पानं कृतवान् इति कारणतः तदीयः रोगः तु उपशान्तः । परन्तु चिन्मयस्य जिह्वायाः रुचिज्ञानसामर्थ्यम् एव निर्गतम् अभवत् ।

अतः रुचिज्ञानहीनत्वम् असहमानः चिन्मयः अवधिसमाप्तितः पूर्वम् एव लड्डुकानि कारयित्वा दुराशया यथेष्टं खादितवान् । तेन चिन्मयस्य अजीर्णम्, अग्निमान्द्यं, हृदयवेदना च आरब्धा । अतः पुनः अपि तेन वैद्यसमीपं गन्तव्यम् आपतितम् ।





इत्यतः ज्ञायते यत् भवता बहूनि एव लड्डुकानि खादितानि इति । भवतु, भवता तावन्ति लड्डुकानि कुतः प्राप्तानि ?'' इति उच्चध्वनिना पृष्टवान् वैद्यः ।

चिन्मयः विषयपरिवर्तनं कर्तुम् इच्छन् - ''हन्त! महती उदरवेदना । सोढुम् अशक्यम् एतत् । स्वामिन् ! प्रथमम् औषधं ददातु । अनन्तरं सर्वं वदिष्यामि'' इति उक्तवान् ।

''भवते एतावन्ति लड्डुकानि धनिकेन एव दातुं शक्यन्ते । लड्डुकदाता धनिकः कः सः? वदतु । अनन्तरम् एव अहम् औषधं दास्यामि । रोगं यः उत्पादितवान् सः चिकित्साव्ययं दातुम् अपि शक्तः स्यात् एव । कः सः?'' इति कोपेन पृष्टवान् वैद्यः ।

चिन्मयः पुनः पूर्वतनवेषम् एव धृत्वा ताम्बूलेन सह नाणकं गृहीत्वा वैद्यस्य समीपं गतवान् । वैद्यम् उद्दिश्य - ''मम पूर्वतनः रोगः अपगतः । किन्तु अहम् इदानीं नूतनेन रोगेण पीडितः अस्मि । तदर्थम् अपि योग्यम् औषधं कृपया यच्छतु'' इति प्रार्थितवान् च ।

वैद्यः चिन्मयस्य नाडीपरीक्षां कृत्वा - ''भवतः अजीर्णस्य कारणं किम्? भवान् किं खादितवान् ? वदतु । तत् सर्वं ज्ञात्वा एव मया औषधं दातव्यं भवति'' इति उक्तवान् ।

''अहं ह्यः कानिचन लड्डुकानि खादितवान्'' इति उक्तवान् चिन्मयः ।

''एतावता प्रमाणेन अजीर्णं बाधते

''सः लड्डुकदाता चिन्मयः । अहं तस्य गृहे कार्यं करोमि स्म । बहूनि दिनानि अतीतानि इति कारणतः तं द्रष्टुं ह्यः तस्य गृहं गतवान् आसम् । सः प्रीत्या प्रभूतानि लड्डुकानि दत्तवान् । जिह्वाचपलता-कारणतः अहम् अधिकं खादितवान्'' इति उक्तवान् चिन्मयः ।

''तर्हि भवतः चिन्ता किमर्थम् ? चिकित्सार्थं पञ्चाशत् रूप्यकाणि आवश्यकानि इति तम् उक्त्वा ततः तावत् धनम् आनयतु । गच्छतु । भवतः आगमनात् पूर्वम् औषधं सज्जी-करिष्यामि'' इति उक्तवान् वैद्यः ।

''एवं धनस्य याचना अनुचिता खलु स्वामिन्? तेन दत्तानि लड्डुकानि खादन्

अहं रोगार्थम् आह्वानं दत्तवान् । इदानीम् औषधव्ययार्थम् अपि धनं कथं पृच्छेयम् ? मया तत् न शक्यते'' इति उक्तवान् चिन्मयः ।

''भवता न शक्यते चेत् अहम् एव स्वयं पृष्ट्वा धनं स्वीकरिष्यामि । अद्य मया चिन्मयस्य ग्रामः गन्तव्यः अस्ति । किञ्चित् कार्यम् अस्ति तत्र'' इति वदन् वैद्यः किञ्चित् चूर्णं चिन्मयस्य मुखे संस्थाप्य, किञ्चित् जलं पाययित्वा - ''अजीर्णम् अचिरात् एव अपगच्छति । सर्वं सम्यक् भविष्यति । अलं चिन्तया गत्वा आगच्छतु'' इति उक्त्वा तं प्रेषितवान् ।

औषधस्वीकरणानुक्षणं चिन्मयस्य मुखे महान् तापः आरब्धः । शिरोभ्रमणम् अपि आरब्धम् । कर्णौ पिहितौ इव भासते स्म । 'समीपतरमार्गेण गत्वा शीघ्रं गृहं प्राप्य किमपि मधुरं खादामि' इति चिन्तयन् ततः प्रस्थितः चिन्मयः । परन्तु अल्पे एव काले नितरां श्रान्तः सः, अग्रे गन्तुम् अशक्तः सन् कस्यचित् वृक्षस्य छायायाम् उपविष्टवान् । तावता वैद्यः अन्येन मार्गेण चिन्मयस्य गृहं प्राप्य कुत्रापि गतवतः तस्य निरीक्षायाम् उपविष्टवान् आसीत् ।

किञ्चित्कालानन्तरं चिन्मयः महता प्रयासेन गृहं प्राप्तवान् । तत्र स्थितवन्तं वैद्यं दृष्ट्वा - ''भवान् अत्र !'' इति साश्चर्यं वदन् भित्तेः पार्श्वस्थे आसन्दे चिन्ताक्रान्तः सन् उपविष्टवान् ।

अनन्तरं सः चिन्मयं दृष्ट्वा - ''मम मनसि संशयः आसीत् एव । ये परिश्रमेण जीवनं कुर्वन्ति ते एतादृशेन रोगेण बाधिताः न भवन्ति । भवान् यदा नेत्ररोगस्य औषधार्थम् आगतः तदा भवन्तं दरिद्रं मत्वा एव रूक्षौषधं दत्तवान् आसम् । भवादृशानां कृते एव रुचिकरलेह्यानि, सुगन्धौषधानि, तैलानि च सन्ति । अजीर्णार्थम् अपि तथैव । रोगसन्दर्भे व्ययविषये चिन्तनं कदापि न करणीयम् एव । व्ययविषये अधिकं चिन्तनं कृतं चेत् महत् कष्टम् अनुभोक्तव्यम् एव । अतः व्ययविषये अलं चिन्तया । भवते रुचिकराणि एव औषधानि दास्यामि'' इति उक्तवान् ।

चिन्मयाय रुचिकरौषधानि एव दत्त्वा चिकित्सां कृत्वा ततः प्रभूतं धनं स्वीकृतवान् वैद्यः।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां अक्टोबर् - १९९७ मासे प्रकटयिष्यामः ।



S. G. SESHAGIRI



S. G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

**'जून्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **स्पृशन्तौ नन्दतः बालौ दैवसृष्टिम् ।**

द्वितीयचित्रम् - **कुर्वती नन्दति बाला स्वयं सृष्टिम् ॥**

प्रेषिका - जि. एस्. रूपश्रीः, श्रीनिधिनिलयः, वासवीमहल्मार्गः, अरसीकेरे - ५७३ १०३




Printed by **B.V. REDDI** at Prasad Process Private Ltd., Chandamama Buildings, Chennai - 600 026 (India) and Published by **B. VISHWANATHA REDDI** on behalf of **CHANDAMAMA PUBLICATIONS**, 188, N.S.K. Salai, Vadapalani, Chennai - 600 026 (India) Editor : **NAGI REDDI.**

अपने प्यारे चहेतें के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**

आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु

**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 129.00 वायु सेवा से रु. 276.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 135.00 वायु सेवा से रु. 276.00

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.



स म झ दा र
ब च्चों की
स म झ दा र
प स न्द




**नटराज**

*यह योजना सिर्फ नटराज 621 HB और नटराज पेटल्स के 10 पेन्सिल वाले पैक पर, स्टॉक रहने तक उपलब्ध है.

हिन्दुस्तान पॅसिल्स लि. के उत्कृष्ट उत्पादन